Digitized by Arya Samaj Foundation Chennai and eGangotri

॥ श्रीः ॥ 04683

॥ श्रीमद्वेङ्कटेश्वराय नमः ॥

श्रीसिंहगुप्तसून्वष्टाङ्गहृदयकर्तृ-

श्रीवाग्भटाचार्यकृतः

# रसरत्नसमुच्चयः ।




सोऽयं

रसप्रसादौषधालयाध्यक्षश्रीजीवरामकालिदास

वैद्यराजेन संशोध्य

क्षेमराज-श्रीकृष्णदासश्रेष्ठिना

मुम्बय्यां

स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितः । वैद्य धर्मदत्त स्मृति संग्रह

माघे संवत् १९६५, शके १८३०.

57/08

अस्य ग्रन्थस्य सर्वेऽधिकाराः प्रकाशकाधीनाः सन्ति ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

# प्रस्तावना.

अयि विदितमेव सरसहृदयाः सकलसिद्धिसमर्थायुर्वेदविद्यापारावारपारदृश्वानः सज्जनाः! यत्सकलसुखशिरोगण्यतया प्रार्थ्यमानं प्रथमं शरीरारोग्यमेव समस्तप्राणिमात्रेणापेक्ष्यमाणं सर्वतो जोघुष्यत इति। शरीरारोग्यं चाशंसितं वेदपुरुषेणापि—"आशिष्ठो बलिष्ठो द्रढिष्ठः" इत्यादिवचनैः। शरीरारोग्यार्थमेव प्रथमत ऋग्वेदादायुर्वेदः प्रादुर्भावितो भगवता। तदेतदभिप्रेत्योक्तम्—"ऋग्वेदादायुर्वेदः, यजुर्वेदाद्धनुर्वेदः, सामवेदाद्गान्धर्वम्, अथर्ववेदादर्थशास्त्रम्" इति वेदांगग्रन्थे। अयं चायुर्वेदः सकलजगदुपकारकतयाऽत्यन्तं समादरणीयतामर्हतीत्येतद्विचार्यैव भगवता तत्प्रसाराय धन्वन्तर्यश्विनीकुमारादिरूपेणावतीर्य शिष्यप्राशिष्यपरंपरयायुर्वेदस्योपबृंहणार्थं नानाविधवैद्यकशास्त्रसंहिताग्रन्थाः प्राकाश्यमानीयन्त। स एष भगवतोऽस्माकं भविकजनानामुपरि भूयानुपकारस्तत्सेवयास्माभिः प्रत्युपकरणेन सर्वथा शिरसा श्लाघनीय इति सकलसज्जनसम्मत एष सन्मार्ग इति सर्वत एव विश्रुतम्।

अथ चात्र प्रस्तुतं किञ्चिन्निवेद्यते—प्राचीना वैद्यकशास्त्राचार्यास्तावच्छिवचरकसुश्रुतनागार्जुनरावणमन्थानभैरवप्रभृतयोनेके बभूवुस्तैश्चानेके वैद्यकसंहिताग्रन्था निर्माय सकलजनानामुपकाराय शिष्यप्राशिष्यपरंपरया पठनपाठनपारिणालिकयाऽस्मिन्भूतले समवतार्य विस्तारितास्तच्छिष्यैश्चापि तथैव स्वानुभवेन च नूतना ग्रन्था विनिर्माय यथागुरुपरंपरं पाठिताः सम्यगुपकुर्वतेऽद्यावध्यनन्तकालं चेतः परमपि च। आयुर्वेदश्चायमुपबृंहितस्तैस्तैराचार्यैरेवम्।

तत्र च श्रीवाग्भटाचार्याः सुविश्रुता एव प्रायः सर्वेषां वैद्यकशास्त्राचार्यगणाग्रगण्यनामधेयाः। तैश्च विनिर्मिताष्टाङ्गहृदय—रसरत्नसमुच्चय—नामानौ ग्रन्थौ तु तत्प्राग्वर्तिसकलवैद्यकशास्त्राचार्याणां तत्त्वसिद्धान्तान्स्वरूपेणैव दर्शयतः। तत्र च—अष्टाङ्गहृदयग्रन्थे मानुषीचिकित्सापरपर्याया वनौषधिचिकित्सा, रसरत्नसमुच्चय—ग्रन्थे च दैवीचिकित्सापरपर्याया धातुरसचिकित्सा च सुव्यक्तं निरूपिते स्तः।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


अथ च प्रकृते–रसरत्नसमुच्चयग्रन्थे–सकलधातूपधातूनां शोधन–जारण–मारण–भस्म–रसादिक्रियाः सशास्त्रतया सर्वेषां वैद्यकशास्त्राभ्यासशीलानां तावदवश्यं बो[धाय] समुचिता एवेति सर्वमान्यमेव । एतदेव मनसि निधाय महता परिश्रमेणैतद्‌ **रसरत्नसमुच्चय**–नामकं पुस्तकमनेकप्राचीनप्रतिपुस्तकैः संमेलनाय संशोधनाय च मुंबयीस्थगुलालवाडीसंस्थापित "रसप्रासादौषधालया"ध्यक्ष--श्रीजीवरामकालिदासराज-वैद्यराजसमीपे दत्तम् । तैश्चेदं सम्यक्परिशोध्यास्मत्समीपे समानीतम् । तदेतद-स्माभिः स्वकीये **'श्रीवेङ्कटेश्वर'** स्टीम्–मुद्रणालये मुद्रयित्वा प्राकाश्यमानीयत । अभ्यर्थये चेतः सर्ववैद्यकशास्त्रिणः सज्जनान्–एनं सर्वमान्यं रसशास्त्रग्रंथं संगृह्यैतदुक्त-सशास्त्रक्रियया धातुरसौषधानि निर्माय तैश्चानेकेषां रुग्णजनानां चिरतापकान्दुर्ज-रान्रोगानपनीयारोग्यप्रदानेन धर्मं कीर्तिं चाप्नुवन्तु तत्रभवन्त इति ।

भवदीयकृपाभिलाषी–

**क्षेमराज-श्रीकृष्णदास,**

**"श्रीवेङ्कटेश्वर" स्टीम्** मुद्रणालयाध्यक्षः,

**मुंबई.**



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

॥ श्रीः ॥

# अथ रसरत्नसमुच्चयविषयानुक्रमणिका:



| विषयाः | पृष्ठाङ्काः |
|---|---|

## पूर्वखण्डम् ।

### प्रथमोऽध्यायः ।



### द्वितीयोऽध्यायः ।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri





## तृतीयोऽध्यायः ।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri




CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri





CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri





## दशमोऽध्यायः।

### मूषा–कोठी–पुटौषधी-ग्रहणपरिभाषाः।





CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri





एकादशोऽध्यायः।

रसशोधनादिकथनम्।



इति पूर्वखण्डः।

---

# अथोत्तरखण्डः।

## द्वादशोऽध्यायः।

ज्वरचिकित्सा।



ज्वरः।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri




## त्रयोदशोऽध्यायः ।



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri




CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri





CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri





CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri





CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri





CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri




## एकविंशोऽध्यायः।



३

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri





CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri




CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri




इति रसरत्नसमुच्चयविषयानुक्रमणिका समाप्ता ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

॥ श्रीमद्वेङ्कटेश्वराय नमः ॥

श्रीवाग्भटाचार्यकृत-

# रसरत्नसमुच्चयः ।

## पूर्वखण्डम् ।

04683

### रसोत्पत्तिः ।

### मङ्गलम् ।

यस्यानंदभवेन मंगलकलासंभावितेन स्फुर-
द्धाम्ना सिद्धरसामृतेन करुणावीक्षासुधासिंधुना ॥
भक्तानां प्रभवप्रसंहतिजरारागादिरोगाः क्षणा-
च्छांतिं यांति जगत्प्रधानभिषजे तस्मै परस्मै नमः ॥

पुस्तकालय

अत्र गृहीतसाहाय्यग्रंथकृन्नामादि-

आदिमश्चंद्रसेनश्च लंकेशश्च विशारदः । कपाली मत्तमांडव्यौ भास्करः शूरसेनकः ॥ २ ॥ रत्नकोषश्च शंभुश्च सात्त्विको नरवाहनः । इंद्रदो गोमुखश्चैव कलंबिर्व्याडिरेव च ॥ ३ ॥ नागार्जुनः सुरानंदो नागबोधी यशोधनः । खंडः कापालिको ब्रह्मा गोविंदो लंपको हरिः ॥ ४ ॥ सप्तविंशतिसंख्याका रससिद्धिप्रदायकाः । रसांकुशो भैरवश्च नंदी स्वच्छंदभैरवः ॥ ५ ॥ मंथानभैरवश्चैव काकचंडीश्वरस्तथा । वासुदेव ऋषिः शृंगः क्रियातंत्रसमुच्चयी ॥ ६ ॥ रसेंद्रतिलको योगी भालुकी मैथिलाह्वयः ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



महादेवो नरेंद्रश्च वासुदेवो हरीश्वरः ॥ ७ ॥ एतेषां क्रियतेऽन्येषां तंत्राण्यालोक्य संग्रहः । रसानामथ सिद्धानां चिकित्सार्थोपयोगिनाम् ॥ ८ ॥ सूनुना सिंहगुप्तस्य रसरत्नसमुच्चयः । रसोपरसलोहानां यंत्रादिकरणानि च ॥ ९ ॥ शुद्ध्यर्थमपि लोहानां तंत्रादिकरणानि च ॥ शुद्धिः सत्त्वद्रुतिर्भस्मकरणं च प्रवक्ष्यते ॥ १० ॥

हिमालयवर्णनं तत्र महादेवनिवास ।

अस्ति नीहारनिलयो महानुत्तरदिङ्मुखे । उत्तुंगशृंगसंघातलंघिताभ्रो महीधरः ॥११॥ विश्रामाय वियन्मार्गविलंघनघनश्रमः ।अवतीर्ण इव क्षोणीं शरदंबुमुचां गणः ॥१२॥ राशिराशीविषाधीशफणाफलकरोचिषाम् । भित्त्वा भुवमिवोत्तीर्णो यो विभाति भृशोन्नतः ॥ १३ ॥ ज्वलदौषधयो यस्य नितंबमणिभूमयः । नक्तमुद्दामतडितामनुकुर्वंति वार्मुचाम् ॥ १४ ॥ कटके संचरंतीनां यस्य किन्नरयोषिताम् । पादे कृतं धातुरागेण लाक्षाकृत्यमनुष्ठितम् ॥ १५ ॥ अवतंसितशीतांशुराच्छादितदिगंबरः । यो गुहाधिगतो लोकैर्गिरीश इति गीयते ॥ १६ ॥

महादेवस्थितिः ।

निमीलितदृशो नित्यं मुनयो यस्य सानुषु । प्रत्यक्षयंति गिरिशमवाङ्मनसगोचरम् ॥ १७ ॥ शिलातलप्रतिहतैर्यस्य निर्झरसीकरैः । अहन्यपि निरीक्षंते यक्षास्तारांकितं नभः ॥ १८ ॥ नीहारपवनोद्रेकानिःसहा यत्र पूरुषाः । निजस्त्रीणां निषेवंते कुचोष्माणं निरंतरम् ॥ १९ ॥ संचरन्कट

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



यस्य निदाघेपि दिवाकरः । उद्दामंहिमरुद्धोष्मा न शीतांशो-र्विभिद्यते ॥ २० ॥ गुहागतेषु कस्तूरीमृगनाभिसुगंधिषु । गायंति यत्र किन्नर्यो गौरीपरिणयोत्सवम् ॥ २१ ॥ चकास्ति तत्र जगतामादिदेवो महेश्वरः । रसात्मना जगत्त्रातुं जातो यस्मान्महारसः ॥ २२ ॥

पारदोत्तमता।

शताश्वमेधेन कृतेन पुण्यं गोकोटिभिः स्वर्णसहस्रदानात्। नृणां भवेत्सूतकदर्शनेन यत्सर्वतीर्थेषु कृताभिषेकात् ॥२३॥ विधाय रसलिंगं यो भक्तियुक्तः समर्चयेत्। जगत्रितयालिं-गानां पूजाफलमवाप्नुयात् ॥ २४ ॥ भक्षणं स्पर्शनं दानं ध्यानं च परिपूजनम्। पंचधा रसपूजोक्ता महापातकना-शिनी ॥ २५ ॥ हंति भक्षणमात्रेण पूर्वजन्माघसंभवम्। रोगसंघमशेषाणां नराणां नात्र संशयः ॥ २६ ॥ पूर्वजन्म-कृतं पापं सद्यो नश्यति देहिनाम्। सुगंधपिष्टसूतेन यदि ...मुर्विलेपितः ॥ २७ ॥ अभ्रकं त्रुटिमात्रं यो रसेन ...रिजारयेत्। शतक्रतुफलं तस्य भवेदित्यब्रवीच्छिवः॥२८॥ ...श्च निंदति सूतेंद्रं शंभोस्तेजः परात्परम्। स पतेन्नरके घोरे ...वत्कल्पविकल्पना ॥ २९ ॥

पारदस्य विशेषतो महत्ता।

रोगिभ्यो यो रसं दत्ते शुद्धिपाकसमन्वितम्। तुलादा-...श्वमेधानां फलं प्राप्नोति शाश्वतम् ॥ ३० ॥ सिद्धे रसे ...रिष्यामि निर्दारिद्र्यमयं जगत्। रसध्यानमिति प्रोक्तं ...हत्यादिपापनुत् ॥ ३१ ॥ अभ्रग्रासो हि सूतस्य नैवेद्यं

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


परिकीर्तितम् । रसस्येत्यर्चनं कृत्वा प्राप्नुयात्क्रतुजं फलम् ॥ ३२ ॥ उदरे संस्थिते सूते यस्योत्क्रामति जीवितम् । स मुक्तो दुष्कृताद्घोरात्प्रयाति परमं पदम् ॥ ३३ ॥

मूर्च्छितादिपारदगुणाः ।

मूर्च्छित्वा हरति रुजं बंधनमनुभूय मुक्तिदो भवति । अमरीकरोति हि मृतः कोन्यः करुणाकरः सूतात् ॥ ३४ ॥ सुरगुरुगोद्विजहिंसापापकलापोद्भवं किलासाध्यम् । श्वि- तदपि च शमयति यस्तस्मात्कः पवित्रतरः सूतात् ॥ ३५ ॥ रसबंध एव धन्यः प्रारंभे यस्य सततमिति करणा सेत्स्यति रसे करिष्ये महीमहं निर्जरामरणाम् ॥ ३६ ॥

देहे जरामरणादिराहित्यमावश्यकं तत्र पारदस्यावश्यकता-

सुकृतफलं तावदिदं सुकुले यज्जन्म धीश्च तत्रापि । सा च सकलमहीतलतुलनफला भूतलं च सुविधेयम् ॥ ३७ ॥ भूतलविधेयतायाः फलमर्थास्ते च विविधभोगफलाः भोगाः संति शरीरे तदनित्यमतो वृथा सकलम् ॥ ३८ ॥ इति धनशरीरभोगान्मत्वाऽनित्यान्सदैव यतनीयम् । मुक्तौ सा च ज्ञानात्तच्चाभ्यासात्स च स्थिरे देहे ॥ ३९ ॥ तत्स्थैर्ये न समर्थं रसायनं किमपि मूललोहादि । स्वय- स्थिरस्वभावं दाह्यं क्लेद्यं च शोष्यं च ॥ ४० ॥

सर्वौषधानां पारदे समावेशः ।

काष्ठौषध्यो नागे नागो वंगेथ वंगमपि शुल्बे । शु- तारे तारं कनके कनकं च लीयते सूते ॥ ४१ ॥ अमृत- हि भंजते हरमूर्तौ योगिनो यथा लीनाः । तद्वत्कवलितग- रसराजे हेमलोहाद्याः ॥ ४२ ॥ परमात्मनीव संततं भज-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


लयो यत्र सर्वसत्त्वानाम् । एकोसौ रसराजः शरीरमजरामरं कुरुते ॥ ४३ ॥ स्थिरदेहेऽभ्यासवशात्प्राप्य ज्ञानं गुणाष्टकोपेतम् । प्राप्नोति ब्रह्मपदं न पुनर्भववासजन्मदुःखानि॥४४॥

पारदाद्ब्रह्मप्राप्तिः ।

एकांशेन जगद्युगपदवष्टभ्यावस्थितं परं ज्योतिः । पादैस्त्रिभिस्तदमृतं सुलभं न विरक्तिमात्रेण ॥ ४५ ॥ न हि देहेन कथंचिद्व्याधिजरामरणदुःखविधुरेण । क्षणभंगुरेण सूक्ष्मं तद्ब्रह्मोपासितुं शक्यम् ॥ ४६ ॥ नामापि देहसिद्धेः को गृह्णीयाद्विना शरीरेण । तद्योगगम्यममलं मनसोपि न गोचरं तत्त्वम् ॥ ४७ ॥ यज्ञाज्ज्ञानात्तपसो वेदाध्ययनाद्दमात्सदाचारात् । अत्यंतभूयसी किल योगवशादात्मसंवित्तिः ॥ ४८ ॥

ब्रह्मप्राप्तेरानंदः ।

भ्रूमध्यगतं यच्छिखिविद्युत्सूर्येन्दुवज्जगद्भाति । केषांचित्पुण्यदृशामुन्मीलति चिन्मयं परं ज्योतिः ॥ ४९ ॥ परमानंदैकरसं परमं ज्योतिः स्वभावमविकल्पम् । विगलितसकलक्लेशं ज्ञेयं शांतं स्वसंवेद्यम् ॥५०॥ तस्मिन्नाधाय मनः स्फुरदखिलं चिन्मयं जगत्पश्यन् । उत्सन्नकर्मबंधो ब्रह्मत्वमिहैव चाप्नोति ॥ ५१ ॥ रागद्वेषविमुक्ताः सत्याचारा मृषारहिताः। सर्वत्र निर्विशेषा भवंति चिद्ब्रह्मसंस्पर्शात् ॥५२॥ तिष्ठंत्यणिमादियुता विलसद्देहाः सदोदितानंदाः । ब्रह्मस्वभावममृतं संप्राप्ताश्चैव कृतकृत्याः ॥ ५३ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


### समाधौ कीदृशशरीरापेक्षा ।

आयतनं विद्यानां मूलं धर्मार्थकाममोक्षाणाम् । श्रेयः परं किमन्यच्छरीरमजरामरं विहायैकम् ॥ ५४ ॥ प्रत्यक्षेण प्रमाणेन यो न जानाति सूतकम् । अदृष्टविग्रहं देवं कथं ज्ञास्यति चिन्मयम् ॥ ५५ ॥ यज्जरया जर्जरितं कासश्वासादिदुःखविवशं च । योग्यं तन्न समाधौ प्रतिहतबुद्धीन्द्रियप्रसरम् ॥ ५६ ॥

### मुक्त्यर्थं शरीरस्य जरामरणराहित्यापेक्षा ।

बालः षोडशवर्षो विषयरसास्वादलंपटः परतः । यातविवेको वृद्धो मर्त्यः कथमाप्नुयान्मुक्तिम् ॥ ५७ ॥ अस्मिन्नेव शरीरे येषां परमात्मनो न संवेदः । देहत्यागादूर्ध्वं तेषां तद्ब्रह्म दूरतरम् ॥ ५८ ॥ ब्रह्मादयो यतंते तस्मिन्दिव्यां तनुं समाश्रित्य । जीवन्मुक्ताश्चान्ये कल्पांतस्थायिनो मुनयः ॥ ५९ ॥ तस्माज्जीवन्मुक्तिं समीहमानेन योगिना प्रथमम् । दिव्या तनुर्विधेया हरगौरीसृष्टिसंयोगात् ॥ ६० ॥

### रसोत्पत्तिः ।

शैलेस्मिञ्छिवयोः प्रीत्या परस्परजिगीषया । संप्रवृत्ते च संभोगे त्रिलोकीक्षोभकारिणि ॥ ६१ ॥ विनिवारयितुं वह्निः संभोगं प्रेषितः सुरैः । कांक्षमाणैस्तयोः पुत्रं तारकासुरमारकम् ॥ ६२ ॥ कपोतरूपिणं प्राप्तं हिमवत्कंदरेऽनलम् । अपक्षिभावसंक्षुब्धं स्मरलीलाविलोकिनम् ॥ ६३ ॥ तं दृष्ट्वा लज्जितः शंभुर्विरतः सुरतात्तदा । प्रच्युतश्चरमो धातुर्गृहीतः शूलपाणिना ॥ ६४ ॥ प्रक्षिप्तो वदने वह्नेर्गंगाया-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


मपि सोऽपतत्। बहिः क्षिप्तस्तया सोपि परिदंदह्यमानया॥ ॥ ६५ ॥ संजातास्तन्मलाधानाद्धातवः सिद्धिदायकाः। यावदग्निमुखाद्रेतो न्यपतद्भुवि सर्वतः ॥ ६६ ॥ शतयोजननिम्नास्ते जाता कूपास्तु पंच च। तदाप्रभृति कूपस्थं तद्रेतः पंचधाऽभवत् ॥ ६७ ॥

रसानां भेदः।

रसो रसेंद्रः सूतश्च पारदो मिश्रकस्तथा। इति पंचविधो जातः क्षेत्रभेदेन शंभुजः ॥ ६८ ॥ रसो रक्तो विनिर्मुक्तः सर्वदोषै रसायनः। संजातास्त्रिदशास्तेन नीरुजा निर्जरामराः ॥ ६९ ॥ रसेंद्रो दोषनिर्मुक्तः श्यावो रूक्षोऽतिचंचलः। रसायिनोऽभवंस्तेन नागा मृत्युजरोज्झिताः ॥७०॥ देवनागैश्च तौ कूपौ पूरितौ मृद्भिरश्मभिः। तदाप्रभृति लोकानां तौ जातावतिदुर्लभौ ॥ ७१ ॥ ईषत्पीतश्च रूक्षांगो दोषमुक्तश्च सूतकः। दशाष्टसंस्कृतैः सिद्धो देहं लोहं करोति सः ॥७२॥ अथान्यकूपजः कोपि स चलः श्वेतवर्णवान्। पारदो विविधैर्योगैः सर्वरोगहरो हि सः ॥ ७३ ॥ मयूरचंद्रिकाच्छायः सरसो मिश्रको मतः। सोप्यष्टादशसंस्कारयुक्तश्चातीव सिद्धिदः ॥७४॥ त्रयः सूतादयः सूताः सर्वसिद्धिकरा अपि। निजकर्मविनिर्माणैः शक्तिमंतोऽतिमात्रया ॥ ७५ ॥

पञ्चपारदानां पृथक्पृथङ् निरुक्तिः।

एतां रससमुत्पत्तिं यो जानाति स धार्मिकः। आयुरारोग्यसंतानं रससिद्धिं च विंदति ॥ ७६ ॥ रसनात्सर्वधातूनां 'रस' इत्यभिधीयते। जरारुङ्मृत्युनाशाय रस्यते वा रसोऽ-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


मृतः ॥ ७७ ॥ रसोपरसराजत्वाद् 'रसेंद्र' इति कीर्तितः । देहलोहमयीं सिद्धिं सूते 'सूत' स्ततः स्मृतः ॥ ७८ ॥ रोगपंकाब्धिमग्नानां पारदानाच्च 'पारदः' । सर्वधातुगतं तेजो मिश्रितं यत्र तिष्ठति। तस्मात्स 'मिश्रकः' प्रोक्तो नानारूपफलप्रदः ॥ ७९ ॥

पारदावस्थितकंचुकादिदोषाः ।

एवंभूतस्य सूतस्य मर्त्यमृत्युगदाच्छिदः । प्रभावान्मानुषा जाता देवतुल्यबलायुषः ॥ ८० ॥ तान्दृष्ट्वाऽभ्यर्थितो रुद्रः शक्रेण तदनंतरम् । दोषैश्च कंचुकाभिश्च रसराजो नियोजितः। तदाप्रभृति सूतोऽसौ नैव सिद्ध्यत्यसंस्कृतः ॥ ८१ ॥ जलगो जलरूपेण त्वरितो हंसगो भवेत् । मलगो मलरूपेण सधूमो धूमगो भवेत् ॥ ८२ ॥ अन्या जीवगतिर्दैवी जीवोऽण्डादिव निष्क्रमेत्। सतांश्च जीवयेज्जीवांस्तेन जीवो रसः स्मृतः ॥ ८३ ॥ चतस्रो गतयो दृश्या अदृश्या पंचमी गतिः। मंत्रध्यानादिना तस्य रुध्यते पंचमी गतिः ॥ ८४ ॥ इति भिन्नगतित्वाच्च सूतराजस्य दुर्लभः । संस्कारस्तस्य भिषजा निपुणेन तु रक्षयेत् ॥ ८५ ॥

रसरसेन्द्रयोः प्राचीना निष्कासन रीतिः ।

प्रथमे रजसि स्नातां हयारूढां स्वलंकृताम् । वीक्षमाणां व दृष्ट्वा जिघृक्षुः कूपगो रसः ॥ ८६ ॥ उद्गच्छति जवात्सा तं दृष्ट्वा याति वेगतः। अनुगच्छति तां सूतः सीमानं योजनोन्मिताम् ॥ ८७ ॥ प्रत्यायाति ततः कूपं वेगतः शिवसंभवः । मार्गनिर्मितगर्तेषु स्थितं गृह्णंति पारदम् ॥ ८८ ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पतितो दरदे देशे गौरवाद्वह्निवक्त्रतः । स रसो भूतले लीनस्तत्तद्देशनिवासिनः । तां मृदं पातनायंत्रे क्षिप्त्वा सूतं हरंति च ॥ ८९ ॥

इति श्रीवाग्भटाचार्य विरचिते रसरत्नसमुच्चये प्रथमोऽध्यायः ।

# द्वितीयोऽध्यायः ।

## अष्टौ महारसाः ।

अभ्रवैक्रांतमाक्षीकविमलाद्रिजसस्यकम् । चपलो रसकश्चेति ज्ञात्वाऽष्टौ संग्रहेद्रसान् ॥ १ ॥

## अभ्रकस्य सामान्यगुणाः ।

गौरीतेजः परममृतं वातपित्तक्षयघ्नं प्रज्ञाबोधि प्रशमितरुजं वृष्यमायुष्यमग्र्यम् । बल्यं स्निग्धं रुचिदमकफं दीपनं शीतवीर्यं तत्तद्योगैः सकलगदहृद्व्योम सूतेंद्रबंधि ॥ २ ॥ राजहस्तादधस्ताद्यत्समानीतं घनं खनेः । भवेत्तदुक्तफलदं निःसत्त्वं निष्फलं परम् ॥ ३ ॥

## अभ्रकभेदाः ।

पीनाकं नागं मंडूकं वज्रमित्यभ्रकं मतम् । श्वेतादिवर्णभेदेन प्रत्येकं तच्चतुर्विधम् ॥ ४ ॥ पीनाकं पावकोत्तप्तं विमुंचति दलोच्चयम् ॥ तत्सेवितं मलं बद्धा मारयत्येव मानवम् ॥ ५ ॥ नागाभ्रं नागवत्कुर्याद्ध्वनिं पावकसंस्थितम् । तद्युक्तं कुरुते कुष्ठं मंडलाख्यं न संशयः ॥ ६ ॥ उत्प्लुत्योत्प्लुत्य मंडूकं ध्मातं पतति चाभ्रकम् । तत्कुर्यादश्मरीरोगमसाध्यं शस्त्रतोऽन्यथा ॥ ७ ॥ वज्राभ्रं वह्निसंतप्तं विमुक्ताऽशेषवैकृतम् । देहलोहकरं तच्च सर्वरोगहरं परम् ॥ ८ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


चतुरभ्रकोपयोगः ।

श्वेतं रक्तं च पीतं च कृष्णमेवं चतुर्विधम् ॥ ९ ॥ श्वेतं श्वेतक्रियासूक्तं रक्ताभं रक्तकर्मणि । पीताभमभ्रकं यत्तु श्रेष्ठं तत्पीतकर्मणि ॥ १० ॥ चतुर्विधं परं व्योम यद्यप्युक्तं रसायने । तथापि कृष्णवर्णाभ्रं कोटिकोटिगुणाधिकम्॥११॥ स्निग्धं पृथुदलं वर्णसंयुक्तं भारतोऽधिकम् । सुखनिर्मोच्यपत्रं च तदभ्रं शस्तमीरितम् ॥ १२ ॥

गुणदोषौ ।

सचंद्रिकं च किट्टाभं व्योम न ग्रासयेद्रसम् । ग्रसितश्च नियोज्योऽसौ लोहे चैव रसायने ॥ १३ ॥ निश्चंद्रिकं मृतं व्योम सेव्यं सर्वगदेषु च । सेवितं चंद्रसंयुक्तं मेहं मंदानलं चरेत् ॥ १४ ॥ यैरुक्तं युक्तिनिर्मुक्तैः पत्राभ्रकरसायनम् । तैर्दिष्टं कालकूटाख्यं विषं जीवनहेतवे ॥ १५ ॥ सत्त्वार्थं सेवनार्थं च योजयेच्छोधिताभ्रकम् । अन्यथा त्वगुणं कृत्वा विकरोत्येव निश्चितम् ॥ १६ ॥

अभ्रकशुद्धिस्तथा भस्म ।

प्रतप्तं सप्तवाराणि निक्षिप्तं कांजिकेभ्रकम् । निर्दोषं जायते नूनं प्रक्षिप्तं वापि गोजले ॥ १७ ॥ त्रिफलाक्वथिते वापि गवां दुग्धे विशेषतः । ततो धान्याभ्रकं कृत्वा पिष्ट्वा मत्स्याक्षिकारसैः ॥ १८ ॥ चक्रीं कृत्वा विशोष्याथ पुटेद्गर्भके पुटे । पुटेदेवं हि षड्वारं पौनर्नवरसैः सह ॥ १९ ॥ कलांशटंकणेनाथ संमर्द्य कृतचाक्रिकम् ॥ अर्धेभाख्यपुटैस्तद्वत्सप्तवारं पुटे त्वलु ॥ २० ॥ एवं वासा-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


रसेनापि तण्डुलीयरसेन च । प्रपुटेत्सप्तवाराणि पूर्वप्रोक्तविधानतः॥२१॥एवं सिद्धं हतं सर्वरोगेषु विनियोजयेत् ॥२२॥

धान्याभ्रकं तथा भस्म ।

चूर्णाभ्रं शालिसंयुक्तं वस्त्रबद्धं हि कांजिके । निर्यातं मर्दनाद्वस्त्राद्धान्याभ्रमिति कथ्यते ॥ २३ ॥ धान्याभ्रं कासमर्दस्य रसेन परिमर्दितम् । पुटितं दशवारेण म्रियते नात्र संशयः ॥ २४ ॥

अभ्रकभस्म ।

तद्वन्मुस्तारसेनापि तण्डुलीयरसेन च । पीतामलकसौभाग्यपिष्टं चक्रीकृताभ्रकम् ॥ २५ ॥ पुटितं षष्टिवाराणि सिंदूराभं प्रजायते। क्षयाद्यखिलरोगघ्नं भवेद्रोगानुपानतः २६

अभ्रकभस्मविधिः ।

वटमूलत्वचः क्वाथैस्तांबूलीपत्रसारतः । वासामत्स्याक्षिकाभ्यां वा मीनाक्ष्या सकटिल्लया ॥ २७ ॥ पयसा वटवृक्षस्य मर्दितं पुटितं घनम् । भवेद्विंशतिवारेण सिंदूरसदृशप्रभम् ॥ २८ ॥

अभ्रकसत्त्वपातनम् ।

पादांशटंकणोपेतं मुशलीपरिमर्दितम् । रुध्यात्कोष्ठ्यां दृढं ध्मातं सत्त्वरूपं भवेद्घनम् ॥ २९ ॥ कासमर्दवनाधान्यवासानां च पुनर्भुवः । मत्स्याक्ष्या काकवल्याश्च हंसपाद्या रसैः पृथक् ॥ ३० ॥ पिष्ट्वा पिष्ट्वा प्रयत्नेन शोषयेद्घर्मयोगतः । पलं गोधूमचूर्णस्य क्षुद्रमत्स्याश्च टंकणम् ॥ ३१ ॥ प्रत्येकमष्टमांशेन दत्वा रुध्वा विमर्दयेत् । मर्दने

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


मर्दने सम्यक् शोषयेद्रविरश्मिभिः ॥ ३२ ॥ पंचाजं पंच गव्यं च पंचमाहिषमेव च ॥ ३३ ॥ क्षिप्त्वा गोलान्प्रकुर्वीत किंचित्तिंदुकतोऽधिकान् । अधःपातनकोष्ठ्यां हि ध्मात्वा सत्त्वं निपातयेत् ॥ ३४ ॥ कोष्ठ्या किट्टं समाहृत्य विचूर्ण्य खकान्हरेत् । तत्किट्टं स्वल्पटंकेन गोमयेन विमर्द्य च ॥ ३५ ॥ गोलान्विधाय संशोष्य धमेद्भूयोऽपि पूर्ववत् । भूयः किट्टं समाहृत्य मृदित्वा सत्त्वमाहरेत् ॥ ३६ ॥ अथ सत्त्वकणांस्तांस्तु क्वाथयित्वाम्लकांजिकैः । शोधनीयगणोपेतं मूषामध्ये निरुध्य च ॥ ३७ ॥ सम्यग्द्रुतं समाहृत्य द्विवारं प्रधमेद्धनम् । इति शुद्धं भवेत्सत्त्वं योज्यं रसरसायने ॥ ३८ ॥

अभ्रकद्रुतिः ।

मधुतैलवसाज्येषु द्रावितं परिवापितम् । मृदु स्याद्दशवारेण सत्त्वं लोहादिकं खरम् ॥ ३९ ॥

सत्त्वाभ्ररसायनम् ।

पट्टचूर्णं विधायाथ गोघृतेन परिप्लुतम् । भर्जयेत्सप्तवाराणि चुल्लीसंस्थितखर्परे ॥४०॥ अग्निवर्णं भवेद्यावद्वारं वा विचूर्णयेत् । तृणं क्षिप्त्वा दहेद्यावत्तावद्वा भर्जनं चरेत्॥४१॥ ततः सगंधकं पिष्ट्वा वटमूलकषायतः । पुटेद्विंशतिवाराणि वाराहेण पुटेन हि ॥ ४२ ॥ पुनर्विंशतिवाराणि त्रिफलोत्थकषायतः । त्रिफलामुंडिकाभृंगपत्रपथ्याक्षमूलकैः ॥४३॥ भावयित्वा प्रयोक्तव्यं सर्वरोगेषु मात्रया । एवं चेच्छतवाराणि पुटपाकेन साधितम् ॥ ४४ ॥ सत्त्वाभ्रान्नापरं किंचिन्निर्विकारं गुणोत्तरम् । गुणवज्जायतेत्यर्थं परं पाचनदीपनम् ॥ ४५

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


अभ्रकभस्मविधिः ।

गंधर्वपत्रतोयेन गुडेन सह भावितम् । अधोर्ध्वं वटपत्राणि निश्चंद्रं त्रिपुटैः खगम् ॥ ४६ ॥ क्षुधं करोति चात्यर्थं गुंजार्धमिति सेवया । तत्तद्रोगहरैर्योगैः सर्वरोगहरं परम् ॥ ४७ ॥

दिव्याभ्ररसायनम् ।

सत्त्वस्य गोलकं ध्मातं सस्यसंयुक्तकांजिके । निर्वाप्य तत्क्षणेनैव कुट्टयेल्लोहपारया ॥ ४८ ॥ संप्रताप्य घनस्थूलकणान्क्षिप्त्वाथ कांजिके ॥ तत्क्षणेन समाहृत्य कुट्टयित्वा रजश्चरेत् ॥ ४९ ॥ गोघृतेन च तच्चूर्णं भर्जयेत्पूर्ववत्त्रिधा । धात्रीफलरसैस्तद्वद्धात्रीपत्ररसेन वा ॥ ५० ॥ भर्जने भर्जने कार्यं शिलापट्टेन पेषणम् । ततः पुनर्नवावासारसैः कांजिकमिश्रितैः ॥ ५१ ॥ प्रपुटेद्दशवाराणि दशवाराणि गंधकैः । एवं संशोधितं व्योमसत्त्वं सर्वगुणोत्तरम् ॥ यथेष्टं विनियोक्तव्यं जारणे च रसायने ॥ ५२ ॥ वेल्लव्योषसमन्वितं घृतयुतं वल्लोन्मितं सेवितं दिव्याभ्रं क्षयपाण्डुरुग्ग्रहणिकाशूलामकुष्ठामयम् । ऊर्ध्वश्वासगदं प्रमेहमरुचिं कासामयं दुर्धरं मंदाग्निं जठरव्यथां विजयते योगैरशेषामयान् ॥ ५३ ॥

द्रुतयो नैव निर्दिष्टा शास्त्रे दृष्टा अपि दृढम् । विना शंभोः प्रसादेन न सिद्ध्यंति कदाचन ॥ ५४ ॥

वैक्रांतपरीक्षा ।

अष्टास्त्रश्चाष्टफलकः षट्कोणो मसृणो गुरुः । शुद्धमिश्रितवर्णैश्च युक्तो वैक्रांत उच्यते ॥ ५५ ॥ श्वेतो रक्तश्च

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


पीतश्च नीलः पारावतच्छविः । श्यामलः कृष्णवर्णश्च कर्बूरश्चाष्टधा हि सः ॥ ५६ ॥

वैक्रांतगुणाः ।

आयुःप्रदश्च बलवर्णकरोऽतिवृष्यः प्रज्ञाप्रदः सकलदोषगदापहारी ॥ दीप्ताग्निकृत्यविसमानगुणस्तरस्वी वैक्रांतकः खलु वपुर्बललोहकारी ॥ ५७ ॥ रसायनेषु सर्वेषु पूर्वंगण्यः प्रतापवान् । वज्रस्थाने नियोक्तव्यो वैक्रांतः सर्वदोषहा ॥ ५८ ॥

वैक्रांतोत्पत्तिभेदः ।

दैत्येंद्रो माहिषः सिद्धः सहदेवसमुद्भवः । दुर्गा भगवती देवी तं शूलेन व्यमर्दयत् ॥ ५९ ॥ तस्य रक्तं तु पतितं यत्र यत्र स्थितं भुवि । तत्र तत्र तु वैक्रांतं वज्राकारं महारसम् ॥ ६० ॥ विंध्यस्य दक्षिणे भागे ह्युत्तरे वास्ति सर्वतः । विकृंतयति लोहानि तेन वैक्रांतकः स्मृतः ॥ ६१ ॥ श्वेतः पीतस्तथा रक्तो नीलः पारावतच्छविः । मयूरकंठसदृशश्चान्यो मरकतप्रभः॥ ६२॥ देहसिद्धिकरं कृष्णं पीते पीतं सिते सितम् । सर्वार्थसिद्धिदं रक्तं तथा मरकतप्रभम् ॥ ६३ ॥ शेषे द्वे निष्फले वर्ज्ये वैक्रांतमिति सप्तधा ॥ ६४ ॥ यत्र क्षेत्रे स्थितं चैव वैक्रांतं तत्र भैरवम्। विनायकं च संपूज्य गृह्णीयाच्छुद्धमानसः ॥ ६५ ॥ वैक्रांतो वज्रसदृशो देहलोहकरो मतः । विषघ्नो रसराजश्च ज्वरकुष्ठक्षयप्रणुत् ॥ ६६ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


वैक्रांतशोधनम् ।

वैक्रांतकाः स्युस्त्रिदिनं विशुद्धाः संस्वेदिताः क्षारपटूनि दत्त्वा । अम्लेषु मूत्रेषु कुलत्थरंभानीरेऽथवा कोद्रववारिपक्वाः ॥ ६७ ॥ कुलत्थक्वाथसंस्विन्नो वैक्रांतः परिशुद्धयति ॥ ६८ ॥

वैक्रांतभस्मविधिः ।

म्रियतेऽष्टपुटैर्गंधनिंबुकद्रवसंयुतः । वैक्रांतेषु च तप्तेषु हयमूत्रं विनिक्षिपेत् ॥ ६९ ॥ पौनःपुन्येन वा कुर्याद्द्रवं दत्त्वा पुटेत्त्वनु । भस्मीभूतं तु वैक्रांतं वज्रस्थाने नियोजयेत् ॥ ७० ॥

वैक्रांतसत्त्वपातनम् ।

मोक्षमोरटपालाशक्षारगोमूत्रभावितम् । वज्रकंदनिशाकल्कफलचूर्णसमन्वितम् । तत्कल्कं टंकणं लाक्षाचूर्णं वैक्रांतसंभवम् ॥ ७१ ॥ नवसारसमायुक्तं मेषशृंगीद्रवान्वितम् । पिण्डितं मूकमूषस्थं ध्मापितं च हठाग्निना ॥ ७२ ॥ तत्रैव पतते सत्त्वं वैक्रांतस्य न संशयः । सत्त्वपातनयोगेन मर्दितश्च वटीकृतः । मूषास्थो घटिकाध्मातो वैक्रांतः सत्त्वमुत्सृजेत् ॥ ७३ ॥

वैक्रांतरसायनम् ।

भस्मत्वं समुपागतो विकृतको हेम्ना मृतेनान्वितः पादांशेन कणाज्यवेल्लसहितो गुंजामितः सेवितः । यक्ष्माणं जरणं च पाण्डुगुदजं श्वासं च कासामयं दुष्टां च ग्रहणीमुरःक्षतमुखान् रोगाञ्जयेद्दाहकृत् ॥ ७४ ॥

(१) गुग्गुलु गुञ्जा ... [illegible]

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


वैक्रांतरसायनम् ।

सूतभस्मार्धसंयुक्तं नीलवैक्रांतभस्मकम् । मृताभ्रसत्त्वमुभयोस्तुलितं परिमर्दितम् ॥ ७५ ॥ क्षौद्राज्यसंयुतं प्रातर्गुंजामात्रं निषेवितम् । निहंति सकलान्रोगान्दुर्जयानन्यभेषजैः । त्रिसप्तदिवसैर्नृणां गंगांभ इव पातकम् ॥ ७६ ॥

सुवर्णमाक्षिकोत्पत्तिलक्षणगुणाः ।

सुवर्णशैलप्रभवो विष्णुना कांचनो रसः । तापीकिरातचीनेषु यवनेषु च निर्मितः ॥ ७७ ॥ ताप्यः सूर्यांशुसंतप्तो माधवे मासि दृश्यते । मधुरः कांचनाभासः साम्लो रजतसन्निभः ॥ ७८ ॥ किंचित्कषायमधुरः शीतः पाके कटुर्लघुः । तत्सेवनाज्जराव्याधिविषैर्न परिभूयते ॥७९॥ माक्षिको द्विविधो हेममाक्षिकस्तारमाक्षिकः । तत्राद्यं माक्षिकं कान्यकुब्जोत्थं स्वर्णसन्निभम् ॥ ८० ॥ तपतीतीरसंभूतं पंचवर्णसुवर्णवत् । पाषाणबहलः प्रोक्तस्ताराख्योल्पगुणात्मकः ॥८१॥ माक्षीकधातुः सकलामयघ्नः प्राणो रसेंद्रस्य परं हि वृष्यः । दुर्मेललोहद्वयमेलनश्च गुणोत्तरः सर्वरसायनाग्र्यः ॥ ८२ ॥

सुवर्णमाक्षिकशोधनमारणे ।

एरंडतैललुंगांबुसिद्धं सिद्धयति माक्षिकम् । सिद्धं वा कदलीकंदतोयेन घटिकाद्वयम् ॥ तप्तं क्षिप्तं वराक्वाथे शुद्धिमायाति माक्षिकम् ॥ ८३ ॥ मातुलुंगांबुगंधाभ्यां पिष्टं मूषोदरे स्थितम् । पंचक्रोडपुटे दग्धं म्रियते माक्षिकं खलु॥८४॥ एरंडस्नेहगव्याज्यैर्मातुलुंगरसेन वा । खर्परस्थं दृढं पक्वं जायते धातुसन्निभम् ॥८५॥ एवं मृतं रसे योज्यं रसायनविधावपि ॥ ८६ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


सुवर्णमाक्षिकसत्त्वपातनम् ।

त्रिंशांशनागसंयुक्तं क्षारैरम्लैश्च मर्दितम् । ध्मातं प्रकटमूषायां सत्त्वं मुञ्चति माक्षिकम् ॥ ८७ ॥ सप्तवारं परिद्राव्य क्षिप्तं निर्गुण्डिकाद्रवे । माक्षीकसत्त्वसंमिश्रं नागं नश्यति निश्चितम् ॥ ८८ ॥ क्षौद्रगंधर्वतैलाभ्यां गोमूत्रेण घृतेन च । कदलीकंदसारेण भावितं माक्षिकं मुहुः ॥ ८९ ॥ मूषायां मुञ्चति ध्मातं सत्त्वं शुल्बनिभं मृदु ॥ ९० ॥ गुंजाबीजसमच्छायं द्रुतद्रावं च शीतलम् । ताप्यसत्त्वं विशुद्धं तद्देहलोहकरं परम् ॥ ९१ ॥

सुवर्णमाक्षिकरसायनम् ।

माक्षीकसत्त्वं च रसेन पिष्टं कृत्वा विलीने च बलिं निधाय ॥ संमिश्र्य संमर्द्य च खल्वमध्ये निक्षिप्य सत्त्वं द्रुतिमभ्रकस्य ॥९२॥ विधाय गोलं लवणाख्ययंत्रे पचेद्दिनार्धं मृदुवह्निना च ॥ स्वतः सुशीतं परिचूर्ण्य सम्यग्वल्लोन्मितं व्योषविडंगयुक्तम् ॥ ९३ ॥ संसेवितं क्षौद्रयुतं निहंति जरां सरोगामपमृत्युमेव ॥ दुःसाध्यरोगानपि सप्तवासरैर्नैतेन तुल्योस्ति सुधारसोपि ॥ ९४ ॥

सुवर्णमाक्षिकद्रावणम् ।

एरण्डोत्थेन तैलेन गुंजा क्षौद्रं च टंकणम् । मर्दितं तस्य लेपेन सत्त्वं माक्षिकजं द्रवेत् ॥ ९५ ॥

२

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



### रौप्यमाक्षिकम् ।

विमलस्त्रिविधः प्रोक्तो हेमाद्यस्तारपूर्वकः। तृतीयः कांस्यविमलस्तत्तत्कांत्या च लक्ष्यते ॥ ९६ ॥ वर्तुलः कोणसंयुक्तः स्निग्धश्च फलकान्वितः । मरुत्पित्तहरो वृष्यो विमलोऽतिरसायनः ॥ ९७ ॥ पूर्वो हेमक्रियासूक्तो द्वितीयो रौप्यकृन्मतः । तृतीयो भेषजे तेषु पूर्वपूर्वगुणोत्तरः ॥ ९८ ॥

### रौप्यमाक्षिकशोधनमारणसत्त्वपातनानि ।

आटरूषजले स्विन्नो विमलो विमलो भवेत् । जंबीरस्वरसे स्विन्नो मेषशृंगीरसेऽथ वा ॥ ९९ ॥ आयाति शुद्धिं विमलो धातवश्च यथापरे । गंधाश्मलकुचाम्लैश्च म्रियते दशभिः पुटैः ॥ १०० ॥ सटंकलकुचद्रावैर्मेषशृंग्याश्च भस्मना। पिष्टो मूषोदरे लिप्तः संशोष्य च निरुध्य च॥ १०१॥ षट्प्रस्थकोकिलैर्ध्मातो विमलः शशिसंनिभम् । सत्त्वं मुञ्चति तद्युक्तो रसः स्यात्स रसायनः ॥ १०२ ॥ विमलं शिग्रुतोयेन कांक्षी कासीसटंकणम् । वज्रकंदसमायुक्तं भावितं कदलीरसैः ॥ १०३ ॥ मोक्षकक्षारसंयुक्तं ध्मापितं मूकमूषगम् । सत्त्वं चंद्रार्कसंकाशं पतते नात्र संशयः ॥ १०४ ॥

### विमलरसायनम् ।

तत्सत्त्वं सूतसंयुक्तं पिष्टं कृत्वा सुमर्दितम् । विलीनं गंधं क्षिप्त्वा जायते त्रिगुणात्मकम् ॥ १०५ ॥ शिला च पंचगुणां चापि वालुकायंत्रके खलु । तारभस्म दशांशं तावद्वैक्रांतकं मृतम् ॥ १०६ ॥ सर्वमेकत्र संचूर्ण्य पटे परिगाल्य च । निक्षिप्य कूपिकामध्ये परिपूर्य प्रयत्नतः ॥ १०७ ॥ लीढो व्योषवरान्वितो विमलको युक्तो घृं

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


सेवितो हन्याद्दुर्भगकृज्ज्वराञ्छ्वयथुकं पांडुप्रमेहाऽरुचीः। मूलार्तिं ग्रहणीं च शूलमतुलं यक्ष्मामयं कामलां सर्वान्पित्तमरुद्भवान्किमपरैर्योगैरशेषामयान् ॥ १०८ ॥

शिलाजतु।

शिलाजतुर्द्विधा प्रोक्तो गोमूत्राद्यो रसायनः। कर्पूरपूर्वकश्चान्यस्तत्राद्यो द्विविधः पुनः ॥ १०९ ॥ ससत्त्वश्चैव निःसत्त्वस्तयोः पूर्वो गुणाधिकः। ग्रीष्मे तीव्रार्कतप्तेभ्यः पादेभ्यो हिमभूभृतः ॥११०॥ स्वर्णरूप्यार्कगर्भेभ्यः शिलाधातुर्विनिःसरेत्। स्वर्णगर्भगिरेर्जातो जपापुष्पनिभो गुरुः ॥१११॥ स स्वल्पतिक्तः सुस्वादुः परमं तद्रसायनम्। रौप्यगर्भगिरेर्जातं मधुरं पांडुरं गुरु ॥ ११२ ॥ शिलाजं पित्तरोगघ्नं विशेषात्पाण्डुरोगहृत्। ताम्रगर्भगिरेर्जातं नीलवर्णं घनं गुरु ॥११३॥ वह्नौ क्षिप्तं भवेद्यत्तल्लिंगाकारमधूमकम्। सलिलेऽथ विलीनं च तच्छुद्धं हि शिलाजतु ॥ ११४ ॥

गुणाः।

नूनं सज्वरपाण्डुशोफशमनं मेहाग्निमांद्यापहं मेदश्छेदकरं च यक्ष्मशमनं शूलामयोन्मूलनम्। गुल्मप्लीहविनाशनं जठरहृच्छूलामयोन्मूलनं सर्वत्वग्गदनाशनं किमपरं देहे च लोहे हितम् ॥ ११५ ॥रसोपरससूतेंद्ररत्नलोहेषु ये गुणाः। वसंति ते शिलाधातौ जरामृत्युजिगीषया ॥ ११६ ॥

शुद्धि–भस्म।

क्षाराम्लगोजलैर्धौतं शुद्ध्यत्येव शिलाजतु। शिलाधातुं च दुग्धेन त्रिफलामार्कवद्रवैः। लोहपात्रे विनिक्षिप्य शोधयेदति-

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


यत्नतः ॥ ११७ ॥ क्षाराम्लगुग्गुलूपेतैः स्वेदनीयंत्रमध्यगैः । स्वेदितं घटिकामानाच्छिलाधातुर्विशुद्धयति ॥ ११८ ॥ शिलया गंधतालाभ्यां मातुलुंगरसेन च ॥ ११९ ॥ पुटितं हि शिलाधातुर्म्रियतेऽष्टगिरीण्डकैः ॥ १२० ॥

शिलाजतुरसायनम् ।

भस्मीभूताशिलोद्भवं समतुलं कांतं च वैक्रांतकं युक्तं च त्रिफलाकटुत्रिकघृतैर्वल्लेन तुल्यं भजेत् ॥ पाण्डौ यक्ष्मगदे तथाग्निसदने मेहेषु मूलामये गुल्मप्लीहमहोदरे बहुविधे शूले च योन्यामये॥ १२१ ॥ सेवेत यदि षण्मासं रसायनविधानतः । वलीपलितनिर्मुक्तो जीवेद्वर्षशतं सुखी ॥१२२॥

शिलाजतुसत्वम् ।

पिष्ट्वा द्रावणवर्गेण साम्लेन गिरिसंभवम् । क्षिप्त्वा मूषोदरे रुद्ध्वा गाढैध्मातं हि कोकिलैः ॥ सत्वं मुञ्चेच्छिलाधातुस्तत्क्षणाल्लोहसन्निभम् ॥ १२३ ॥

कर्पूरगंधिशिलाजतु ।

पाण्डुरं सिकताकारं कर्पूराद्यं शिलाजतु । मूत्रकृच्छ्राश्मरीमेहकामलापाण्डुनाशनम् ॥ १२४ ॥ एलातोयेन संभिन्नं सिद्धं शुद्धिमुपैति तत् । नैतस्य मारणं सत्त्वपातनं विहितं बुधैः ॥ १२५ ॥

सस्यकम् ।

पीत्वा हालाहलं वांतं पीतामृतगरुत्मता । विषेणामृतयुक्तेन गिरौ मरकताह्वये ॥ १२६ ॥ तद्वांतं हि घनीभूतं संजातं सस्यकं खलु । मयूरकण्ठसच्छायं भाराढ्यमति

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



शस्यते ॥ १२७ ॥ द्रव्यं विषयुतं यत्तद्रव्याधिकगुणं भवेत्। हालाहलं सुधायुक्तं सुधाधिकगुणं तथा ॥ १२८ ॥ निःशेषदोषविषहृद्गदशूलमूलकुष्ठाम्लपैत्तिकविबंधहरं परं च॥रासायनं वमनरेककरं गरघ्नं श्वित्रापहं गदितमत्र मयूरतुत्थम् १२९

तुत्थशुद्धिः।

तुत्थकं शुद्धिमाप्नोति रक्तवर्गेण भावितम् । स्नेहवर्गेण संसिक्तं सप्तवारमदूषितम् ॥ १३० ॥ दोलायंत्रेण सुस्विन्नं सस्यकं प्रहरत्रयम् । गोमहिष्यजमूत्रेण शुद्धयते तुत्थखर्परम् ॥ १३१ ॥

श्री धर्मदत्त वैद्य संग्रह

तुत्थभस्म।

लकुचद्रावगंधाश्मटंकणेन समन्वितम्। निरुध्य मूषिकामध्ये म्रियते कौक्कुटैः पुटैः॥ १३२ ॥

तुत्थसत्त्वपातनम्।

सस्यकस्याथ चूर्णं तु पादसौभाग्यसंयुतम् । करंजतैलमध्यस्थं दिनमेकं निधापयेत् ॥ १३३ ॥ अंधमूषास्यमध्यस्थं ध्मापयेत्कोकिलत्रयम् । इंद्रगोपाकृति चैव सत्त्वं भवति शोभनम् ॥ १३४ ॥ निंबूद्रवालपटंकाभ्यां मूषामध्ये निरुध्य च । ताम्ररूपं परिध्मातं सत्त्वं मुञ्चति सस्यकम् ॥ १३५ ॥ शुद्धं सस्यं शिखिक्रांतं पूर्वभेषजसंयुतम् । नानाविधानयोगेन सत्त्वं मुञ्चति सस्यकम् ॥ १३६ ॥

तुत्थमुद्रिका।

सत्त्वमेतत्समादाय खरभूनागसत्त्वयुक् । तन्मुद्रिकाकृतस्पर्शा शूलघ्नी तत्क्षणाद्भवेत् ॥ १३७ ॥ चराचरं विषं

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


भूतडाकिनीदृग्गतं जयेत् । मुद्रिकेयं विधातव्या दृष्टप्रत्ययकारिका ॥ १३८ ॥ "रामवत्सुरसेनानी मुद्रितेऽपि तथाक्षरम् । हिमालयोत्तरे पार्श्वे अश्वकर्णो महाद्रुमः । तत्र शूलं समुत्पन्नं तत्रैव विलयं गतम्" ॥ १३९ ॥ मंत्रेणानेन मुद्राम्भो निपीतं सप्तमंत्रितम् । सद्यःशूलहरं प्रोक्तमिति भालुकिभाषितम् ॥ १४० ॥ अनया मुद्रया तप्तं तैलमग्नौ सुनिश्चितम् । लेपितं हंति वेगेन शूलं यत्र क्वचिद्भवेत् ॥ १४१ ॥ सद्यः सूतिकरं नार्याः सद्यो नेत्ररुजापहम् ॥ १४२ ॥

चपलः ।

गौरः श्वेतोऽरुणः कृष्णश्चपलस्तु चतुर्विधः । हेमाभश्चैव ताराभो विशेषाद्रसबंधनः ॥ १४३ ॥ शेषौ तु मध्यौ लाक्षावच्छीघ्रद्रावौ तु निष्फलौ । वंगवद्द्रवते वह्नौ चपलस्तेन कीर्तितः ॥ १४४ ॥ चपलो लेखनः सिद्धो देहलोहकरो मतः । रसराजसहायः स्यात्तिक्तोष्णमधुरो मतः ॥ १४५ ॥ चपलः स्फटिकच्छायः षडस्री स्निग्धको गुरुः । त्रिदोषघ्नोऽतिवृष्यश्च रसबंधविधायकः । महारसेषु कैश्चिद्धि चपलः परिकीर्तितः ॥ १४६ ॥ जंबीरकर्कोटकशृंगवेरैर्विभावनाभिश्चपलस्य शुद्धिः ॥ १४७ ॥ शैलं तु चूर्णयित्वाथ धान्याम्लोपविषैर्विषैः । पिण्डं बध्वा तु विधिवत्पातयेच्चपलस्तथा ॥ १४८ ॥

रसकः ।

रसको द्विविधः प्रोक्तो दर्दुरः कारवेल्लकः । सदलो दर्दुरः प्रोक्तो निर्दलः कारवेल्लकः ॥ १४९ ॥ सत्त्वपाते शुभः पूर्वो

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


द्वितीयश्चौषधादिषु ॥ १८० ॥ रसकः सर्वमेहघ्नः कफपित्तविनाशनः । नेत्ररोगक्षयघ्नश्च लोहपारदरंजनः ॥ १८१ ॥ नागार्जुनेन संदिष्टौ रसश्च रसकावुभौ । श्रेष्ठौ सिद्धरसौ ख्यातौ देहलोहकरौ परम् ॥ १८२ ॥ रसश्च रसकश्चोभौ येनाग्निसहनौ कृतौ । देहलोहमयी सिद्धिर्दासी तस्य न संशयः ॥ १८३ ॥

खर्परशोधनम् ।

कटुकालाबुनिर्यास आलोड्य रसकं पचेत् । शुद्धं दोषविनिर्मुक्तं पीतवर्णं च जायते ॥ १८४ ॥ खर्परः परिसंतप्तः सप्तवारं निमज्जितः । बीजपूररसस्यांतर्निर्मलत्वं समश्नुते ॥ १८५ ॥ नृमूत्रे वाऽश्वमूत्रे वा तक्रे वा कांजिकेथ वा । प्रताप्य मज्जितं सम्यक् खर्परं परिशुद्ध्यति ॥ १८६ ॥ नरमूत्रे स्थितो मासं रसको रंजयेद्ध्रुवम् । शुद्धताम्रं रसं तारं शुद्धस्वर्णसमप्रभम् ॥ १८७ ॥

खर्परभस्म तथा सत्त्वपातनम् ।

हरिद्रात्रिफलारालासिंधुधूमैः सटंकणैः । सारुष्करैश्च पादांशैः साम्लैः संमर्द्य खर्परम् ॥ १८८ ॥ लिप्तं वृंताकमूषायां शोषयित्वा निरुध्य च । मूषामुखोपरि न्यस्य खर्परं प्रधमेत्ततः ॥ १८९ ॥ खर्परे प्रद्रुते ज्वाला भवेन्नीला सिता यदि । तदा संदंशतो मूषां धृत्वा कृत्वा त्वधोमुखीम् । शनैरास्फालयेद्भूमौ यथा नालं न भिद्यते ॥ १९० ॥ वंगाभं पतितं सत्त्वं समादाय नियोजयेत् । एवं त्रिचतुरैर्वारैः सत्त्वं

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


सर्वं विनिःसरेत् ॥ १६१ ॥ साभयाजतुभूनागनिशाधूमज-टंकणम् । मूकमूषागतं ध्मातं शुद्धं सत्त्वं विमुञ्चति ॥ १६२ ॥

खर्परसत्त्वपातनम् ।

लाक्षागुडाऽऽसुरीपथ्याहरिद्रासर्जटंकणैः। सम्यक् संचूर्ण्य तत्पक्कं गोदुग्धेन घृतेन च ॥ १६३ ॥ वृंताकमूषिकामध्ये निरुध्य गुटिकीकृतम् । ध्मात्वा ध्मात्वा समाकृष्य ढाल-यित्वा शिलातले । सत्त्वं बंगाकृति ग्राह्यं रसकस्य मनोहरम् ॥ १६४ ॥ यद्वा जलयुतां स्थालीं निखनेत्कोष्ठिकोदरे । सच्छिद्रं तन्मुखे मल्लं तन्मुखेऽधोमुखीं क्षिपेत् ॥ १६५ ॥ मूषोपरि शिखित्रांश्च प्रक्षिप्य प्रधमेद्दृढम् । पतितं स्था-लिकानीरे सत्त्वमादाय योजयेत् ॥ १६६॥ तत्सत्त्वं तालको-पेतं प्रक्षिप्य खलु खर्परे । मर्दयेल्लोहदण्डेन भस्मीभवति निश्चितम् ॥ १६७ ॥

खर्पररसायनम् ।

तद् भस्म मृतकांतेन समेन सह योजयेत्॥ १६८॥अष्ट गुंजामितं चूर्णं त्रिफलाक्काथसंयुतम् । कांतपात्रस्थितं रात्रौ तिलजप्रतिवापकम् ॥ १६९ ॥ निषेवितं निहंत्याशु मधुमेह-मपि ध्रुवम्॥ १७०॥ पित्तं क्षयं च पाण्डुं च श्वयथुं गुल्ममेव च । रक्तगुल्मं च नारीणां प्रदरं सोमरोगकम् ॥ १७१ ॥ योनिरोगानशेषांश्च विषमाख्याञ्ज्वरानपि । रजःशूलं च नारीणां कासं श्वासञ्च हिध्मिकाम् ॥ १७२ ॥

इति श्रीवाग्भटाचार्यविरचिते रसरत्नसमुच्चये द्वितीयोऽध्यायः ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



# तृतीयोऽध्यायः ।

## अपरसष्टोः । उपरसाष्टौ

गंधाश्मगौरिकासीसकांक्षीतालशिलांजनम् । कंकुष्टं चेत्युपरसाश्चाष्टौ पारदकर्मणि ॥ १ ॥

## गंधकोत्पत्तिः ।

गंधकस्य तु माहात्म्यं तद्गुह्यं वद मे विभो। श्वेतद्वीपे पुरा देवि सर्वरत्नविभूषिते । सर्वकाममये रम्ये तीरे क्षीरपयोनिधेः ॥२॥ विद्याधरीभिर्मुख्याभिरंगनाभिश्च योगिनाम् । सिद्धांगनाभिः श्रेष्ठाभिस्तथैवाप्सरसां गणैः ॥ ३ ॥ देवांगनाभी रम्याभिः क्रीडंतीभिर्मनोहरम् । गीतैर्नृत्यैर्विचित्रैश्च वाद्यैर्नानाविधैस्तथा ॥ ४ ॥ एवं संक्रीडमानायाः प्राभवत्प्रसृतं रजः । तद्रजोऽतीव सुश्रोणि सुगंधि सुमनोहरम् ॥ ५ ॥ रजसश्चातिबाहुल्याद्वासस्ते रक्ततां गतम् । तत्र त्यक्त्वा तु तद्वस्त्रं सुस्नाता क्षीरसागरे ॥ ६ ॥ वृता देवांगनाभिस्त्वं कैलासं पुनरागता । ऊर्मिभिस्तद्रजोवस्त्रं नीतं मध्ये पयोनिधेः ॥७॥ एवं ते शोणितं भद्रे प्रविष्टं क्षीरसागरे । क्षीराब्धिमथने चैतदमृतेन सहोत्थितम् ॥८॥ निजगंधेन तान्सर्वान्हर्षयन्दैत्यदानवान् । ततो देवगणैरुक्तं गंधकाख्यो भवत्वयम् ॥ ९ ॥ ये गुणाः पारदे प्रोक्तास्ते चैवात्र भवंत्विति । रसस्य बंधनार्थाय जारणाय भवत्वयम् ॥ १० ॥ इति देवगणैः प्रीतैः पुरा प्रोक्तं सुरेश्वरि । तेनायं गंधको नाम विख्यातः क्षितिमंडले ॥ ११ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


गंधकभेदाः ।

स चापि त्रिविधो देवि शुभ्रचंचुनिभो वरः । मध्यस्तद्र
पीतवर्णः स्याच्छुक्लवर्णोऽधमः स्मृतः ॥ १२ ॥ चतुर्धा ग
गंधको ज्ञेयो वर्णैः श्वेतादिभिः खलु । श्वेतोत्र खटिका प्रोक्ता
लेपने लोहमारणे ॥१३॥ तथा चामलसारः स्याद्यो भवेद्
त्पीतवर्णवान् । शुकपिच्छः स एव स्याच्छ्रेष्ठो रसरसायने
॥ १४ ॥ रक्तश्च शुकतुंडाख्यो धातुवादविधौ वरः । दुर्लभः
कृष्णवर्णश्च स जरामृत्युनाशनः ॥ १५ ॥

गंधकगुणाः ।

गंधाश्मातिरसायनः सुमधुरः पाके कटूष्णो मतः कण्डू
कुष्ठविसर्पदद्रुदलनो दीप्तानलः पाचनः ॥ आमोन्मोचनशो
षणो विषहरः सूतेंद्रवीर्यप्रदो लीहाध्मानविनाशनः कृमिहृ
हरः सत्त्वात्मकः सूतजित् ॥ १६ ॥ बलिना सेवितः
पूर्वं प्रभूतबलहेतवे । वासुकीं कर्षतस्तस्य तन्मुखज्वालया
युता ॥१७॥ वसा गंधकगंधाढ्या सर्वतो निःसृता तनोः
गंधकत्वं च संप्राप्ता गंधोऽभूत्सविषस्ततः ॥ १८ ॥
तस्माद्बलिवसेत्युक्तो गंधकोऽतिमनोहरः ॥ १९ ॥

गंधकशुद्धिः ।

पयःस्विन्नो घटीमात्रं वारिधौतो हि गंधकः । गव्याज्य
विद्रुतो वस्त्राद्गालितः शुद्धिमृच्छति ॥ २० ॥ एवं संशोधित
सोयं पाषाणानंबरांस्त्यजेत् । घृते विषं तुषाकारं स्वयं
पिण्डत्वमेति च ॥ २१ ॥ इति शुद्धो हि गंधाश्मा
नापथ्यैर्विकृतिं व्रजेत् । अपथ्यादन्यथा हन्यात्पीतं हालाहल

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



पथा ॥ २२ ॥ गंधको द्रावितो भृंगरसे क्षिप्तो विशुध्यति ॥ ध्यस्तद्रसैः सप्तधा स्विन्नो गंधकः परिशुध्यति ॥ २३ ॥ स्थाल्यां चतुर्दुग्धं विनिक्षिप्य मुखे वस्त्रं निबध्य च । गंधकं तत्र निक्षिप्य- ग्रोक्तचूर्णितं सिकताकृति ॥ २४ ॥ छादयेत्पृथुदीर्घेण खर्परेणैव भवेद्गंधकम् । ज्वालयेत्खर्परस्योर्ध्वं वनच्छाणैस्तथोपलैः । दुग्धे सायन्निपतितो गंधो गलितः परिशुद्ध्यति ॥ २५ ॥ "शतवारं दुर्लभ्कृतश्चैवं निर्गंधो जायते बली" ॥ इत्थं विशुद्धस्त्रिफलाज्य- भृंगमध्वान्वितः शाणमितो हि लीढः ॥ गृध्राक्षितुल्यं कुरुते- क्षियुग्मं करोति रोगोज्झितदीर्घमायुः ॥ २६ ॥

गंधकद्रुतिः ।

कलांशव्योषसंयुक्तं गंधकं श्लक्ष्णचूर्णितम् । अरत्निमात्रे कृमिघ्नवस्त्रे तद्विप्रकीर्य विवेष्टय तत् ॥ २७ ॥ सूत्रेण वेष्टयित्वाऽ- वितय यामं तैले निमज्जयेत् । धृत्वा संदंशतो वर्तिमध्यं प्रज्वा- लयेच्च तत् ॥ २८ ॥ द्रुतो निपतितो गंधो बिंदुषः काचभा- जने । तां द्रुतिं प्रक्षिपेत्पत्रे नागवल्यास्त्रिबिंदुकाम् ॥ २९ ॥ ल्लेन प्रमितं स्वच्छं सूतेंद्रं च विमर्दयेत् । अंगुल्याऽथ पत्रां तां द्रुतिं सूतं च भक्षयेत् ॥ ३० ॥ करोति दीपनं ग्निं क्षयं पाण्डुं च नाशयेत् । कासं श्वासं च शूलार्तिं ग्रहणीमतिदुर्धराम् । आमं विनाशयत्याशु लघुत्वं करोति च ॥ ३१ ॥

गंधकप्रयोगः ।

घृताक्ते लोहपात्रे तु विद्रुतं शुद्धगंधकम् । घृताक्तदर्वि- काक्षितं द्विनिष्कप्रमितं भजेत् ॥ ३२ ॥ हंति क्षयमुखान्

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


रोगान्कुष्ठरोगं विशेषतः ॥ ३३॥ गंधकस्तुल्यमरिचः पञ्च
णत्रिफलान्वितः । घृष्टः शम्याकमूलेन पीतश्चाखिलकुष्ठ
॥ ३४ ॥ तन्मूलं सलिले पिष्टं लेपयेत्प्रत्यहं तनौ । दृष्ट-
त्ययोगोयं सर्वत्राप्रतिवीर्यवान् । श्रीमता सोमदे
सम्यगत्र प्रकीर्तितः ॥ ३५ ॥ क्षाराम्लतैलसौवीरविदाहिद्वि
तथा। शुद्धगंधकसेवायां त्याज्यं योगयुतेन हि ॥ ३६ ॥

कण्डूहरप्रयोगः ।

द्विनिष्कप्रमितं गंधं पिष्ट्वा तैलेन संयुतम् ॥ ३७
अथापामार्गतोयेन सतैलमरिचेन च । विलिप्य सक
देहं तिष्ठेद् घर्मे ततः परम् ॥ ३८ ॥ तक्रभक्तं च भुंजी
तृतीये प्रहरे खलु । भजेद्रात्रौ तथा वह्निं समुत्थाय त
प्रगे ॥ ३९ ॥ महिषीछगणं लिप्त्वा स्नायाच्छीतेन वारिणा
ततोऽभ्यज्य घृतैर्देहं स्नायादिष्टोष्णवारिणा ॥ ४०
अमुना क्रमयोगेन विनश्यत्यतिवेगतः । दुर्जया बहुका
लीना पांमा कण्डूः सुनिश्चितम् ॥ ४१ ॥ गंधकस्य प्रयोग
गाणां शतं तत्र प्रकीर्तितम् । ग्रंथविस्तारभीतेन सोमदेवेन
भूभुजा ॥ ४२ ॥

गंधकतैलम् ।

अथवाऽर्कस्नुहीक्षीरैर्वस्त्रं लेप्यं तु सप्तधा । गंधकं नवम
नीतेन पिष्ट्वा वस्त्रं लिपेद्घनम् ॥ ४३ ॥ तद्वर्तिं ज्वालि
दंशे धृतां कुर्यादधोमुखीम् । तैलं पतेदधोभाण्डे ग्राह्यं योगे
योजयेत् ॥ ४४ ॥ शुद्धगंधो हरेद्रोगान्कुष्ठमृत्युजरादिकान्
अग्निकारी महानुष्णो वीर्यवृद्धिं करोति च ॥ ४५ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


## गैरिकम्।

पाषाणगैरिकं चैकं द्वितीयं स्वर्णगैरिकम्। पाषाणगैरिकं प्रोक्तं कठिनं ताम्रवर्णकम् ॥ ४६ ॥ अत्यन्तशोणितं स्निग्धं मसृणं स्वर्णगैरिकम्। स्वादु स्निग्धं हिमं नेत्र्यं कषायं रक्तपित्तनुत् ॥ ४७ ॥ हिध्मावमिविषघ्नं च रक्तघ्नं स्वर्णगैरिकम्। पाषाणगैरिकं चान्यत्पूर्वस्मादल्पकं गुणैः ॥४८॥ गैरिकं तु गवांदुग्धैर्भावितं शुद्धिमृच्छति। गौरिकं सत्त्वरूपं हि नन्दिना परिकीर्तितम् ॥ ४९ ॥ कैरप्युक्तं पतेत्सत्त्वं क्षाराम्लस्विन्नगैरिकात्। उपतिष्ठति सूतेन्द्रमेकत्वं गुणवत्तरम् ॥ ५० ॥

## कासीसरसायनम्।

कासीसं वालुकाद्येकं पुष्पपूर्वमथापरम्। क्षाराम्लागरुधूम्राभं सोष्णवीर्यं विषापहम् ॥ ५१ ॥ वालुकापुष्पकासीसं श्वित्रघ्नं केशरञ्जनम् ॥ ५२ ॥ पुष्पादिकासीसमतिप्रशस्तं सोष्णं कषायाम्लमतीव नेत्र्यम् ॥ विषानिलश्लेष्मगदव्रणघ्नं श्वित्रक्षयघ्नं कचरंजनं च ॥ ५३ ॥ सकृद्भृङ्गांबुना स्विन्नं कासीसं निर्मलं भवेत्। तुवरीसत्त्ववत्सत्त्वमेतस्यापि समाहरेत्। कासीसं शुद्धिमाप्नोति पित्तैश्च रजसा स्त्रियः ॥ ५४ ॥ बलिना हतकासीसं कांतं कासीसमारितम्। अभयं समभागं हि त्रिफलावेल्लसंयुतम् ॥ ५५ ॥ विषमांशघृतक्षौद्रप्लुतं शाणमितं प्रगे। सेवितं हंति वेगेन श्वित्रं पाण्डुं क्षयामयम् ॥ ५६ ॥ गुल्मप्लीहगदं शूलं मूलरोगं विशेषतः।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

रसायनविधानेन सेवितं वत्सरावधि ॥ ५७ ॥ आमसंशो
श्रेष्ठं मंदाग्निपरिदीपनम् । पलितं वलिभिः सार्धं विना
यति निश्चितम् ॥ ५८ ॥

फटकी ।

सौराष्ट्राश्मनि संभूता मृत्स्ना सा तुवरी मता । वस्त्रमु
जयेद्यासौ मंजिष्ठारागबंधिनी ॥ ५९ ॥ फटकी फुल्लि
चेति द्वितीया परिकीर्तिता । ईषत्पीता गुरुः स्निग्धा पीटिक
काविषनाशिनी ॥६०॥ व्रणकुष्ठहरा सर्वकुष्ठघ्नी च विशेष
॥६१॥ निर्भारा शुभ्रवर्णा च स्निग्धा साम्लाऽपरा मता
सा फुल्लतुवरी प्रोक्ता लेपात्ताम्रं चरेदियम् ॥ ६२ ॥ कां
कषाया कटुकाम्लकंठ्या केश्या व्रणघ्नी विषनाशिनी च
श्वित्रापहा नेत्रहिता त्रिदोषशांतिप्रदा पारदजारणी च॥६३
तुवरी कांजिके क्षिप्ता त्रिदिनाच्छुद्धिमृच्छति । क्षाराम्लैर्म
र्दिता ध्माता सत्त्वं मुञ्चति निश्चितम् ॥ ६४ ॥ गोपित्ते
शतं वारान् सौराष्ट्रीं भावयेत्ततः । धमित्वा पातयेत्सत्
क्रामणं चातिगुह्यकम् ॥ ६५ ॥

हरतालम् ।

हरतालं द्विधा प्रोक्तं पत्राद्यं पिण्डसंज्ञकम् । स्वर्णप
गुरुस्निग्धं तनुपत्रं च भासुरम् ॥ ६६ ॥ तत्पत्रतालकं प्रो
बहुपत्रं रसायनम् । निष्पत्रं पिण्डसदृशं स्वल्पपत्रं त
गुरु । स्त्रीपुष्पहरणं तच्चु गुणाल्पं पिण्डतालकम् ॥ ६७

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


…तरक्तविषवातभूतनुत्केवलं च खलु पुष्पहृत्स्त्रियः । …स्निग्धमुष्णकटुकं च दीपनं कुष्ठहारि हरतालमुच्यते ६८॥

हरतालशुद्धिः ।

स्विन्नं कूष्मांडतोये वा तिलक्षारजलेऽपि वा । तोये वा …चूर्णसंयुक्ते दोलायंत्रेण शुद्ध्यति ॥ ६९ ॥ अशुद्धं तालमा-…युघ्नं कफमारुतमेहकृत् । तापस्फोटांगसंकोचं कुरुते तेन …शोधयेत् ॥ ७० ॥ तालकं कणशः कृत्वा दशांशेन च …टंकणम् । जंबीरोत्थद्रवैः क्षाल्यं कांजिकैः क्षालयेत्ततः॥७१॥ …वस्त्रे चतुर्गुणे बद्ध्वा दोलायंत्रे दिनं पचेत् ॥ ७२ ॥ सचूर्णे-…आरनालेन दिनं कूष्मांडजे रसे । स्वेद्यं वा शाल्मलीतोये-…हरतालकं शुद्धिमाप्नुयात् ॥ ७३ ॥

हरतालभस्म ।

मधुतुल्ये घनीभूते कषाये ब्रह्ममूलजे । त्रिवारं तालकं …भाव्यं पिष्ट्वा मूत्रेऽथ माहिषे ॥ ७४ ॥ उपलैर्दशभिर्देयं पुटं …बद्ध्वाथ पेषयेत् । एवं द्वादशधा पाच्यं शुद्धं योगेषु …योजयेत् ॥ ७५ ॥

हरितालसत्वम् ।

कुलित्थक्वाथसौभाग्यमहिष्याज्यमधुप्लुतम् । स्थाल्यां …क्षिप्त्वा विदध्याच्च मल्लेन च्छिद्रयोगिना ॥ ७६ ॥ सम्यङ् …निरुध्य शिखिनं ज्वालयेत्क्रमवर्धितम् । एकप्रहरमात्रं हि …धमाच्छाद्य गोमयैः ॥ ७७ ॥ यामांते छिद्रमुद्घाट्य हृष्टे …धूमे च पाण्डुरे । शीतां स्थालीं समुत्तार्य सत्त्वमुत्कृष्य चाह-…रेत् ॥ ७८ ॥ सर्वपाषाणसत्त्वानां प्रकाराः संति कोटिशः ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

ग्रंथविस्तारभीत्यातो लिखिता न मया खलु ॥ ७९
पलालकं स्वेदुग्धैर्दिनमेकं विमर्दयेत् । क्षिप्त्वा षोडशिकांशे
मिश्रयित्वा ततः पचेत् ॥ ८० ॥ अनावृत्तप्रदेशे च सप्तय
मावधि ध्रुवम् । स्वांगशीतमधःस्थं च सत्त्वं श्वेतं समाहरे
॥ ८१ ॥ छागलस्याथ वाऽलाभे बलिना च समन्वितम्
तालकं दिवसद्वंद्वं मर्दयित्वाऽतियत्नतः ॥ ८२ ॥ युक्तं द्रा
णवर्गेण काचकुप्यां विनिःक्षिपेत् । त्रिधा तां च मृ
लिप्त्वा परिशोष्य खरातपे ॥ ८३ ॥ ततः खर्परकच्छि
तामर्धां चैव कूपिकाम् । प्रवेश्य ज्वालयेदग्निं द्वादशप्रह
वधि ॥ ८४ ॥ कूपीकंठास्थितं श्वेतं शुद्धं सत्त्वं समाहरेत्
पलार्धप्रमितं तालं बद्ध्वा वस्त्रे सिते दृढे ॥ ८५ ॥ बलिन
ऽऽलिप्य यत्नेन त्रिवारं परिशोष्य च । द्राविते त्रिपले ता
क्षिपेत्तालकपोटली ॥ ८६ ॥ भस्मनाच्छादयेच्छीघ्रं ता
णावेष्टितं सितम् । मृदुलं सत्त्वमादद्यात्प्रोक्तं रसरसायने ८७

## मनःशिला ।

मनःशिला त्रिधा प्रोक्ता श्यामाङ्गी कणवीरका
खण्डाख्या चेति तद्रूपं विविच्य परिकथ्यते ॥ ८८
श्यामा रक्ता सगौरा च भाराढ्या श्यामिका मता । तेज
स्विनी च निर्गौरा ताम्राभा कणवीरका ॥ ८९ ॥ चूर्ण
भूताऽतिरक्तांगी सभारा खण्डपूर्विका । उत्तरोत्तरतः श्रे
भूरिसत्त्वा प्रकीर्तिता ॥ ९० ॥ मनःशिला सर्वरसायनाग्र्या
तिक्ता कटूष्णा कफवातहंत्री । सत्त्वात्मिका भूतविषाग्नि

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


कालिनी शक्तिसंयुक्ता रससिद्धिपरायणा ॥ ३४ ॥
यस्यास्तु कुंचिताः केशाः श्यामा या पद्मलोचना ।
सुरूपा तरुणी भिन्ना विस्तीर्णजघना शुभा ॥ ३५ ॥
संकीर्णहृदया पीनस्तनभारेण नम्रिता ।
चुंबनालिंगनस्पर्शकोमला मृदुभाषिणी ॥ ३६ ॥
अश्वत्थपत्रसदृशयोनिदेशसुशोभिता ।
कृष्णपक्षे पुष्पवती सा नारी कालिनी स्मृता ॥ ३७ ॥
रसबंधे प्रयोगे च उत्तमा सा रसायने ।
तदभावे सुरूपा तु या काचित्तरुणाङ्गना ॥ ३८ ॥
तस्या देयं त्रिसप्ताहं गंधकं घृतसंयुतम् ।
कर्षैकैकं प्रभाते तु सा भवेत्कालिनीसमा ॥ ३९ ॥
एवं शक्तियुतो योऽसौ दीक्षयेत्तं गुरूत्तमः ।
सुस्नातमभिषिंचेत मंत्रेण कलशोदकैः ।
अघोरामंकुशीं विद्यां दद्याच्छिष्याय सद्गुरुः ॥ ४० ॥
यथाशक्त्या सुशिष्येण दातव्या गुरुदक्षिणा ॥
अथाज्ञया गुरोर्मंत्रं लक्षं लक्षं पृथग्जपेत् ॥ ४१ ॥
अनया पूजयेद्देवीमिमां विद्यां रसांकुशाम् ।
दशांशेन हुनेत्कुंडे त्रिकोणे हस्तमात्रके ।
जातिपुष्पं त्रिमध्वक्तं पूर्णांते कन्यकार्चनम् ॥ ४२ ॥

रससिद्ध्यर्हसंग्रहणीयपदार्थ
तत्पूजनादि ।

कृत्वाथ प्रविशेच्छालां शुद्धां लिप्तां सवेदिकाम् ॥ ४३
षट्कोणं मण्डलं तत्र सिंदूरेण द्विहस्तकम् ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


वेदिकायां लिखेत्सम्यक् तद्बहिश्चाष्टपत्रकम् ।
कमलं चतुरस्रं च चतुर्द्वारैः सुशोभितम् ॥ ४४ ॥
कर्णिकायां न्यसेत्खल्वं लोहजं स्वर्णलेखितम् ।
तन्मध्ये रसराजं तु पलानां शतमात्रकम् ॥ ४५ ॥
पंचाशत्पंचविंशद्वा पूजयेद्रसलिंगवत् ॥ ४६ ॥
वज्रवैक्रान्तवज्राभ्रकान्तपाषाणटंकणम् ।
भूनागे शक्तयश्चैताः षट्पत्रे पूजयेत्क्रमात् ॥ ४७ ॥
गन्धतालककासीलशिलाकंकुष्ठभूषणम् ।
राजावर्तो गैरिकं च ख्याता उपरसा अमी ।
पूज्या अष्टदले चैते पूर्वादीशानगं क्रमात् ॥ ४८ ॥
रसकं विमला ताप्यं चपला तुत्थमंजनम् ।
हिंगूलं सस्यकं चैव ख्याता एते महारसाः ।
पूर्वादीशानपर्यंतं पत्राग्रेषु प्रपूजयेत् ॥ ४९ ॥
पूर्वद्वारे स्वर्णरौप्ये दक्षिणे ताम्रसीसके ॥ ५० ॥
पश्चिमे बंगकान्तौ च उत्तरे मुण्डतीक्ष्णके ।
सर्वमेतदघोरेण पूजयेदंकुशान्वितम् ॥ ५१ ॥
बिडं कांजिकयंत्राणि क्षारमृल्लवणानि च ।
कोष्ठी मूषा वंकनाली तुषांगारवनोपलाः ॥ ५२ ॥
भस्त्रिका दण्डिकानेका शिला खल्वान्युलूखलम् ।
स्वर्णकारोपकरणं समस्ततुलनानि च ॥ ५३ ॥
मत्काष्ठताम्रलोहोत्थपात्राणि विविधानि च ।
दिव्यौषधीनां वर्गाश्च रंजकस्नेहनानि च ॥ ५४ ॥
एतानि द्वारबाह्ये तु मूलमंत्रेण पूजयेत् ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


वाङ्मायां ह्रीं ततः क्षें च क्ष्मश्च पञ्चाक्षरो मनुः ।
अनेन मूलमंत्रेण भैरवं तत्र पूजयेत् ॥ ५५ ॥

रससिद्धीश्वरब्राह्मणादीनां पूजनम् ।

सर्वेषां रससिद्धानां नाम संकीर्तयेत्तदा ॥ ५६ ॥
व्यालाचार्यश्चंद्रसेनः सुबुद्धिर्नरवाहनः ।
नागार्जुनो रत्नघोषः सुरानंदो यशोधनः ॥ ५७ ॥
इंद्रधूमश्च मांडव्यश्चर्पटी सूरसेनकः ।
आगमो नागबुद्धिश्च खण्डः कापालिको मतः ॥ ५८ ॥
कामारिस्तांत्रिकः शंभुर्लंको लंपकशारदौ ।
बाणासुरो मुनिश्रेष्ठो गोविंदः कपिलो बलिः ॥ ५९ ॥
एते सर्वे तु राजेन्द्रा रससिद्धा महाबलाः ।
चरंति सर्वलोकेषु नित्या भोगपरायणाः ॥ ६० ॥
सप्तविंशतिसंख्याका रससिद्धिप्रदायकाः ।
वंद्याः पूज्याः प्रयत्नेन ततः कुर्याद्रसार्चनम् ॥ ६१ ॥
हर्षयन्द्विजदेवानां तर्पयेदिष्टदेवताः ।
कुमारीयोगिनीयोगीश्वरान्मेलकसाधकान् ॥ ६२ ॥
तर्पयेत्पूजयेद्भक्त्या यथाशक्त्यनुसारतः ॥ ६३ ॥
इत्येवं सर्वसंभारयुक्तं कुर्याद्रसोत्सवम् ।
सर्वविघ्नप्रशांत्यर्थं सर्वेप्सितफलप्रदम् ॥ ६४ ॥
अन्यथा यो विमूढात्मा मंत्रदीक्षाक्रमाद्विना ।
कर्तुमिच्छति सूतस्य साधनं गुरुवर्जितः ॥ ६५ ॥
नासौ सिद्धिमवाप्नोति यत्नकोटिशतैरपि ।
तस्मात्सर्वप्रयत्नेन शास्त्रोक्तां कारयेत्क्रियाम् ॥ ६६ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


पारद सिद्धिकर्तृयोग्यता पारद सिद्धि करणे ।

सम्यक्साधनसोद्यमा गुरुयुता राजाज्ञयाऽलंकृता
नानाकर्मपराङ्मुखा रसपराश्चाढ्या जनैश्चार्थिताः ।
मात्रायंत्रसुपाककर्मकुशलाः सर्वौषधे कोविदा-
स्तेषां सिध्यति नान्यथा विधिबलाच्छ्रीपारदः पारदः ६७
रसशास्त्रं प्रदातव्यं विप्राणां धर्महेतवे ।
राज्ञे वैश्याय वृद्ध्यर्थं दास्यार्थमितरस्य च ॥ ६८ ॥
गुरौ तुष्टे शिवस्तुष्येच्छिवे तुष्टे रसस्तथा ।
रसे तुष्टे क्रियाः सर्वाः सिध्यंत्येव न संशयः ॥ ६९ ॥
रसविद्या दृढं गोप्या मातुर्गुह्यमिव ध्रुवम् ।
भवेद्वीर्यवती गुप्ता निर्वीर्या च प्रकाशनात् ॥ ७० ॥
रोगिणां बहुभिर्ज्ञातं भवेन्निर्वीर्यमौषधम् ।
न रोगिविदितं कार्यं बहुभिर्विदितं तथा ॥ ७१ ॥
इतिश्रीवाग्भटाचार्यविरचिते रससमुच्चये षष्ठोऽध्यायः ।

---

# सप्तमोऽध्यायः ।

## रसशाला ।

रसशालां प्रकुर्वीत सर्वबाधाविवर्जिताम् ।
सर्वौषधमये देशे रम्ये कूपसमन्विते ॥ १ ॥
यक्षत्र्यक्षां सहस्राक्षां दिग्विभागे सुशोभने ।
नानोपकरणोपेतां प्राकारेण सुशोभिताम् ॥ २ ॥
शालायाः पूर्वदिग्भागे स्थापयेद्रसभैरवम् ।
वह्निकर्माणि चाग्नेये याम्ये पाषाणकर्म च ॥ ३ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


नैर्ऋत्ये शस्त्रकर्माणि वारुणे क्षालनादिकम् ।
शोषणं वायुकोणे च वेधकर्मोत्तरे तथा ॥ ४ ॥
स्थापनं सिद्धवस्तूनां प्रकुर्यादीशकोणके ।
पदार्थसंग्रहः कार्यो रससाधनहेतुकः ॥ ५ ॥

रससाधनीयपदार्थाः ।

सत्त्वपातनकोष्ठीं च सुराकोष्ठीं सुशोभनाम् ।
भूमिकोष्ठीं चलत्कोष्ठीं जलद्रोण्योऽप्यनेकशः ॥ ६ ॥
भस्त्रिकायुगलं तद्वन्नालिके पङ्कलोहयोः ।
स्वर्णायोघोषशुल्बाश्मकुंड्यश्चर्मकृतां तथा ॥ ७ ॥
करणानि विचित्राणि द्रव्याण्यपि समाहरेत् ।
कण्डणीपेषणीखल्वाद्रोणीरूपाश्च वर्तुलाः ॥ ८ ॥
आयसास्तप्तखल्वाश्च मर्दकाश्च तथाविधाः ॥ ९ ॥
सूक्ष्मच्छिद्रसहस्राढ्या द्रव्यगालनहेतवे ।
चालनी च कटत्राणि शलाकाऽहिश्च कुंडली ॥ १०
चालनी त्रिविधा प्रोक्ता तत्स्वरूपं च कथ्यते ।
वैणवीभिः शलाकाभिर्निर्मिता ग्रथिता गुणैः ।
कीर्तिता सा सदा स्थूलद्रव्याणां गालने हिता ॥ ११
चूर्णचालनहेतोश्च चालन्यन्यापि वंशजा ।
कर्णिकारस्य शाल्मल्या हरिजातस्य कंबया ।
चतुरंगुलविस्तारयुक्तया निर्मिता शुभा ॥ १२ ॥
कुण्डल्यरत्निविस्तारा छागचर्माभिवेष्टिता ॥ १३ ॥
वाजिवालांबरानद्धतला चालनिका परा ।
तया प्रचालनं कुर्याद्धर्तुं सूक्ष्मतरं रजः ॥ १४ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


मूषामृत्तुषकार्पासवनोपलकपिष्टकम् ।
त्रिविधं भेषजं धातुजीवमूलमयं तथा ॥ १५ ॥
शिखित्रा गौवरं चैव शर्करा च सितोपला ।
शिखित्रा पावकोच्छिष्टा अंगारा कोकिला मताः ।
कोकिलाश्चेतितांगारा निर्वाणाः पयसा विना ॥ १६ ॥
पिष्टकं छगणं छाणसुपलं चोत्पलं तथा ।
गिरिण्डोपलसाठी च संशुष्कच्छगणाभिधाः ॥ १७ ॥
काचायोमृद्वराटानां कूपिका चषकानि च ॥ १८ ॥
कूपिका कुपिका सिद्धा गोला चैव गिरिण्डका ।
चषकं च कटोरी च वाटिका खारिका तथा ।
कञ्चोली ग्राहिका चेति नामान्येकार्थकानि हि ॥ १९ ॥
शूर्पादिवेणुपात्राणि क्षुद्रा क्षिप्राश्च शंखिकाः ।
क्षुरप्राश्च तथा पाक्यो यच्चान्यत्तत्र युज्यते ॥२०॥
पालिका कर्णिका चैव शाकच्छेदनशस्त्रकाः ।
शालासंमार्जनाद्यं हि रसपाकांतकर्म यत् ॥ २१ ॥
तत्रोपयोगि यच्चान्यत्तत्सर्वं परविद्यया ।
श्रीरसांकुशया सर्वं मंत्रयित्वा समर्चयेत् ।
अन्यथा तद्गतं तेजः परिगृह्णंति भैरवाः ॥ २२ ॥

रसक्रियायां कीदृशा वैद्या अन्ये वा नियोज्याः

रससंचिन्तका वैद्या निघंटुज्ञाश्च वार्तिकाः ।
सर्वदेशजभाषाज्ञाः संग्राह्यास्तेऽपि साधकैः ॥ २३ ॥
रसपाकावसानं हि सदाऽघोरं च जापयेत् ॥ २४ ॥



CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


सोद्यमाः शुचयः शूरा बलिष्ठाः परिचारकाः ॥ २५
धर्मिष्ठः सत्यवाग्विद्वाञ् छिवकेशवपूजकः ।
सदयः पद्महस्तश्च संयोज्यो रसवैद्यके ।
पताकाकुंभपाथोजमत्स्यचापांकपाणिकः ॥ २६ ॥
अनामाधस्थरेखांकः सस्यादमृतहस्तवान् ॥ २७ ॥
अदेशिकः कृपामुक्तो लुब्धो गुरुविवर्जितः ।
कृष्णरेखाकरो वैद्यो दग्धहस्तः स उच्यते ॥ २८ ॥
भूतनिग्रहमंत्रज्ञास्ते योज्या निधिसाधने ।
बलिष्ठाः सत्यवन्तश्च रक्ताक्षाः कृष्णविग्रहाः ॥
भूतत्रासनविद्याश्च ते योज्या बलिसाधने ॥ २९ ॥
निर्लोभाः सत्यवक्तारो देवब्राह्मणपूजकाः ।
यमिनः पथ्यभोक्तारो योजनीया रसायने ॥ ३० ॥
धनवंतो वदान्याश्च सर्वोपस्करसंयुताः ।
गुरुवाक्यरता नित्यं धातुवादेषु ते शुभाः ॥ ३१ ॥
तत्तदौषधनामज्ञाः शुचयो वञ्चनोज्झिताः ।
नानाविषयभाषाज्ञास्ते मता भेषजाहृतौ ॥ ३२ ॥
शुचीनां सत्यवाक्यानामास्तिकानां मनस्विनाम् ।
संदेहोज्झितचित्तानां रसः सिध्यति सर्वदा ॥ ३३ ॥
दशाष्टक्रियया सिद्धे रसेऽसौ साधकोत्तमः ।
महारसोयमित्युक्त्वा सेवतान्यत्र तं रसम् ॥ ३४ ॥
रससिद्धो भवेन्मर्त्यो दाता भोक्ता न याचकः ।
जरामुक्तो जगत्पूज्यो दिव्यकांतिः सदा सुखी ॥ ३५

इति श्रीवाग्भटाचार्यविरचिते रसरत्नसमुच्चये सप्तमोऽध्यायः ।

---

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



# अष्टमोऽध्यायः ।

## परिभाषा ।

कथ्यतेसोमदेवेन मुग्धवैद्यप्रबुद्धये ।
परिभाषा रसेंद्रस्य शास्त्रैः सिद्धैश्च भाषिता ॥ १ ॥
अर्धं सिद्धरसस्य, तैलघृतयोर्लेहस्य भागोष्टमः
संसिद्धाखिललोहचूर्णवटकादीनां तथा सप्तमः ।
यो दीयेत भिषग्वराय गदिभिर्निर्दिश्य धन्वंतरिं
सर्वाऽऽरोग्यसुखाप्तये निगदितो भागः स धन्वंतरेः ॥२॥
भैषज्यक्रीणितद्रव्यभागोप्येकादशो हि यः ।
वणिग्भ्यो गृह्यते वैद्यै रुद्रभागः स उच्यते ॥ ३ ॥
प्रगृह्याऽधिकरुद्रांशं योऽसमीचीनमौषधम् ।
दापयेल्लुब्धधीर्वैद्यः स स्याद्विश्वासघातकः ॥ ४ ॥
धातुभिर्गंधकाद्यैश्च निर्द्रवैर्मर्दितो रसः ।
सुश्लक्ष्णः कज्जलाभोऽसौ कज्जलीत्यभिधीयते ॥ ५ ॥
सद्रवा मर्दिता सैव रसपंक इति स्मृतः ॥ ६ ॥

अर्कांशतुल्याद्रसतोऽथ गंधा-
न्निष्कार्धतुल्यात्कुटितोऽभिखल्वे ॥
अर्कातपे तीव्रतरे विमर्द्या
पिष्टीभवेत्सा नवनीतरूपा ॥ ७ ॥

खल्वे विमर्द्य गंधेन दुग्धेन सह पारदम् ।
पेषणात्पिष्टतां याति सा पिष्टीति मता परैः ॥ ८ ॥
चतुर्थांशसुवर्णेन रसेन कृतपिष्टिका ।
भवेत्पातनपिष्टी सा रसस्योत्तमसिद्धिदा ॥ ९ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


रूप्यं वा जातरूपं वा रसगंधादिभिर्हतम् ।
समुत्थितं च बहुशः सा कृष्टी हेमतारयोः ॥ १०॥
कृष्टीं क्षिपेत्सुवर्णांतर्न वर्णो हीयते तया ।
स्वर्णकृष्ट्या कृतं बीजं रसस्य परिरंजनम् ॥ ११ ॥
ताम्रं तीक्ष्णसमायुक्तं द्रुतं निक्षिप्य भूरिशः ।
सगंधलकुचद्रावे निर्गतं वरलोहकम् ॥ १२ ॥
तेन रक्तीकृतं स्वर्णं हेमरक्तीत्युदाहृतम् ।
निक्षिप्ता सा द्रुते स्वर्णे वर्णोत्कर्षविधायिनी ॥ १३॥
तारस्य रंजनी चापि बीजरागविधायिनी ।
एवमेव प्रकर्तव्याताररक्ती मनोहरा ।
रंजनी खलु रूप्यस्य बीजानामपि रंजिनी ॥ १४ ॥

मृतेन वा बद्धरसेन वाऽन्य–
ल्लोहेन वा साधितमन्यलोहम् ।
सितं च पीतत्वमुपागतं त–
द्दलं हि चंद्रानलयोः प्रसिद्धम् ॥ १५ ॥

आवासकृतबद्धेन रसेन सह योजितम् ।
साधितं वाऽन्यलोहेन सितं पीतं च तद्दलम् ॥ १६॥
माक्षिकेण हतं ताम्रं दशवारं समुत्थितम् ।
तद्वद्विशुद्धनागं हि द्वितयं तच्चतुष्पलम् ॥ १७ ॥
नीलांजनहतं भूयः सप्तवारं समुत्थितम् ।
इति संशुद्धमेतद्धि शुल्बनागं प्रकीर्त्यते ॥ १८ ॥
साधितस्तेन सूतेंद्रो वदने विधृतो नृणाम् ।
निहन्ति मासमात्रेण मेहव्यूहं विशेषतः ॥ १९ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


पथ्याशनस्य वर्षेण पलितं वलिभिः सह ।
गृध्रदृष्टिर्लसत्पुष्टिसर्वारोग्यसमन्वितः ॥ २० ॥
लोहं लोहांतरे क्षितं ध्मातं निर्वापितं द्रवे ।
पाण्डुपीतप्रभं जातं पिञ्जरीत्यभिधीयते ॥ २१ ॥
भागाः षोडश तारस्य तथा द्वादश भास्वतः ।
एकत्रावर्तितास्तेन चंद्रार्कमपि कथ्यते ॥ २२ ॥
साध्यलोहेऽन्यलोहं चेत्प्रक्षितं वङ्कनालतः ।
निर्वापणं तु तत्प्रोक्तं वैद्यैर्निर्वाहणं तथा ॥ २३ ॥
क्षिपेन्निर्वापणं द्रव्यं निर्वाह्ये समभागिकम् ।
आवाह्यं वापनीये च भागे दृष्टे च दृष्टवत् ॥ २४ ॥
मृतं तरति यत्तोये लोहं वारितरं हि तत् ॥ २५ ॥
अङ्गुष्ठतर्जनीपृष्टं यत्तद्रेखांतरे विशेत् ।
मृतलोहं तदुद्दिष्टं रेखापूर्णाभिधानतः ॥ २६ ॥
गुडगुंजासुखस्पर्शमध्वाज्यैः सह योजितम् ।
नायाति प्रकृतिं ध्मानादपुनर्भवमुच्यते ॥ २७ ॥
तस्योपरि गुरु द्रव्यं धान्यं चोपनयेद्ध्रुवम् ।
हंसवत्तीर्यते वारिण्युत्तमं परिकीर्तितम् ॥ २८ ॥
रौप्येण सह संयुक्तं ध्मातं रौप्येण चेल्लगेत् ।
तदा निरुत्थमित्युक्तं लोहं तदपुनर्भवम् ॥ २९ ॥
निर्वापणविशेषेण तत्तद्वर्णं भवेद्यदा ।
मृदुलं चित्रसंस्कारं तद्बीजमिति कथ्यते ।
इदमेव विनिर्दिष्टं वैद्यैरुत्तरणं खलु ॥ ३० ॥
संस्पृष्टलोहयोरेकलोहस्य परिसाधनम् ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


प्रध्मातं वङ्कनालेन तत्ताडनमुदाहृतम् ॥ ३१ ॥
चूर्णाभ्रं शालिसंयुक्तं वस्त्रबद्धं हि कांजिके ।
निर्यातं मर्दनाद्वस्त्राद्धान्याभ्रमिति कथ्यते ॥ ३२ ॥
क्षाराम्लद्रावकैर्युक्तं ध्मातमाकरकोष्ठके ।
यस्ततो निर्गतः सारः सत्त्वमित्यभिधीयते ॥ ३३ ॥
कोष्ठिका शिखरापूर्णैः कोकिलैर्ध्मानयोगतः ।
मूषाकण्ठमनुप्राप्यैरेककोलीसको मतः ॥ ३४ ॥
द्रावणे सत्त्वपाते च माधुकाः खादिराः शुभाः ।
निर्द्रवे वंशजास्ते तु स्वेदने बादराः शुभाः ॥ ३५ ॥
विद्याधराख्ययंत्रस्थादार्द्रकद्रावमर्दितात् ।
समाकृष्टो रसो योऽसौ हिंगुलाकृष्ट उच्यते ॥ ३६ ॥
स्वल्पतालयुतं कांस्यं वङ्कनालेन ताडितम् ।
मुक्तरंगं हि तत्ताम्रं घोषाकृष्टमुदाहृतम् ॥ ३७ ॥
तीक्ष्णं नीलांजनोपेतं ध्मातं हि बहुशो दृढम् ।
मृदु कृष्णं द्रुतद्रावं वरनागं तदुच्यते ॥ ३८ ॥
मृतस्य पुनरुद्भूतिः संप्रोक्तोत्थापनाख्यया ।
द्रुतद्रवस्य निक्षेपो द्रवे तद् ढालनं मतम् ॥ ३९ ॥
त्रिंशत्पलमितं नागं भानुदुग्धेन मर्दितम् ।
विमर्द्य पुटयेत्तावद्यावत्कर्षावशेषितम् ॥ ४० ॥
न तत्पुटसहस्रेण क्षयमायाति सर्वदा ।
चपलोयं समादिष्टो वार्तिकैर्नागसंभवः ॥ ४१ ॥
इत्थं हि चपलः कार्यो वङ्गस्यापि न संशयः ।
तत्स्पृष्टहस्तसंस्पृष्टः केवलो बध्यते रसः ॥ ४२ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


स रसो धातुवादेषु शस्यते न रसायने ।
अयं हि खर्वणाख्येन लोकनाथेन कीर्तितः ॥ ४३ ॥
भूभुजंगशकृत्तोयैः प्रक्षाल्यापहृतं रजः ।
कृष्णवर्णं हि तत्प्रोक्तं धौताख्यं रसवादिभिः ॥ ४४ ॥
द्रव्ययोर्मर्दनाध्मानाद्द्वंद्वानं परिकीर्तितम् ।
भागाद्द्रव्याधिके क्षेपमनुवर्णसुवर्णके ॥ ४५ ॥
द्रवैर्वा वह्निकाह्वासो भञ्जनी वादिभिर्मता ।
पतंगीकल्कतो जाता लोहे तारे च हेमता ॥ ४६ ॥
दिनानि कतिचित्स्थित्वा यात्यसौ चुल्लिका मता ।
रंजिताद्धि चिराल्लोहाद्ध्मानाद्वा चिरकालतः ॥ ४७ ॥
विनिर्यासः स निर्दिष्टः पतंगीरागसंज्ञकः ॥ ४८ ॥
द्रुते द्रव्यांतरक्षेपो लोहाद्ये क्रियते हि यः ।
स आवापः प्रतीवापस्तदेवाऽऽच्छादनं मतम् ॥ ४९ ॥
द्रुते वह्निस्थिते लोहे विरम्याष्टनिमेषकम् ।
सलिलस्य परिक्षेपः सोऽभिषेक इति स्मृतः ॥ ५० ॥
तप्तस्याप्सु विनिक्षेपो निर्वापः स्नपनं च तत् ।
प्रतीवापादिकं कार्यं द्रुते लोहे सुनिर्मले ॥ ५१ ॥
यदा हुताशो दीप्तार्चिः शुक्लोत्थानसमन्वितः ।
शुद्धावर्तस्तदा ज्ञेयः स कालः सत्त्वनिर्गमे ॥ ५२ ॥
द्राव्यद्रव्यनिभा ज्वाला दृश्यते धमने यदा ।
द्रावस्योन्मुखता सेयं बीजावर्तः स उच्यते ॥ ५३ ॥
वह्निस्थमेव शीतं यत्तदुक्तं स्वांगशीतलम् ।
अग्नेराकृष्य शीतं यत्तद्बहिः शीतमुच्यते ॥ ५४ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

क्षाराम्लैरौषधैर्वाऽपि दोलायंत्रे स्थितस्य हि ।
पचनं स्वेदनाख्यं स्यान्मलशैथिल्यकारकम् ॥ ५५
उदितैरौषधैः सार्धं सर्वाम्लैः कांजिकैरपि ।
पेषणं मर्दनाख्यं स्याद्बहिर्मलविनाशनम् ॥ ५६ ॥
मर्दनाऽऽदिष्टभैषज्यैर्नष्टपिष्टत्वकारकम् ।
तन्मूर्छनं हि बङ्गादिभुजकंचुकनाशनम् ॥ ५७ ॥
स्वेदातपादियोगेन स्वरूपापादनं हि यत् ।
तदुत्थापनमित्युक्तं मूर्छाव्यापत्तिनाशनम् ॥ ५८ ॥
स्वरूपस्य विनाशेन पिष्टत्वाद्बंधनं हि तत् ।
विद्वद्भिर्निर्जितः सूतो नष्टपिष्टिः स उच्यते ॥ ५९ ॥
उक्तौषधैर्मर्दितपारदस्य
यंत्रस्थितस्योर्ध्वमधश्च तिर्यक् ।
निर्यातनं पातनसंज्ञमुक्तं
बङ्गाहिसंपर्कजकञ्चुकघ्नम् ॥ ६० ॥
जलसैंधवयुक्तस्य रसस्य दिवसत्रयम् ।
स्थितिरास्थापनी कुंभे याऽसौ रोधनमुच्यते ॥ ६१ ॥
रोधनाल्लब्धवीर्यस्य चपलत्वनिवृत्तये ।
क्रियते पारदे स्वेदः प्रोक्तं नियमनं हि तत् ॥ ६२ ॥
धातुपाषाणमूलाद्यैः संयुक्तो घटमध्यगः ।
ग्रासार्थं त्रिदिनं स्वेदो दीपनं तन्मतं बुधैः ॥ ६३ ॥
इयन्मानस्य सूतस्य भोज्यद्रव्यात्मिका मितिः ।
इयतीत्युच्यते याऽसौ ग्रासमानं समीरितम् ॥ ६४ ॥
ग्रासस्य चारणं गर्भे द्रावणं जारणं तथा ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



इति त्रिरूपा निर्दिष्टा जारणावरवार्तिकैः ॥ ६५ ॥
ग्रासः पिण्डः परीणामस्तिस्रश्चाख्याः पराः पुनः ।
समुखा निर्मुखा चेति जारणा द्विविधा पुनः ॥ ६६ ॥
निर्मुखा जारणा प्रोक्ता बीजाऽऽदानेन भागतः ।
शुद्धं स्वर्णं च रूप्यं च बीजमित्यभिधीयते ॥ ६७ ॥
चतुःषष्ट्यंशतो बीजप्रक्षेपो मुखमुच्यते ।
एवं कृते रसो ग्रासलोलुपो मुखवान् भवेत ॥ ६८ ॥
कठिनान्यपि लोहानि क्षमो भवति भक्षितुम् ।
इयं हि समुखा प्रोक्ता जारणा मृगचारिणा ॥ ६९ ॥
दिव्यौषधिसमायोगात्स्थितः प्रकटकोष्ठिषु ।
भुञ्जीताखिललोहाद्यं योऽसौ राक्षसवक्रवान् ॥ ७० ॥
रसस्य जठरे ग्रासक्षेपणं चारणा मता ।
ग्रस्तस्य द्रावणं गर्भे गर्भद्रुतिरुदाहृता ॥ ७१ ॥
बहिरेवं द्रुतिं कृत्वा घनसत्त्वादिकं खलु ।
जारणाय रसेंद्रस्य सा बाह्यद्रुतिरुच्यते ॥ ७२ ॥
निर्लेपत्वं द्रुतत्वं च तेजस्त्वं लघुता तथा ।
असंयोगश्च सूतेन पञ्चधा द्रुतिलक्षणम् ॥ ७३ ॥
औषधाध्मानयोगेन लोहधात्वादिकं तथा ।
संतिष्ठते द्रवाकारं सा द्रुतिः परिकीर्तिता ॥ ७४ ॥
द्रुतग्रासपरीणामो बिडयंत्रादियोगतः ।
जारणेत्युच्यते तस्याः प्रकाराः संति कोटिशः ॥ ७५ ॥
क्षारैरम्लैश्च गंधाद्यैर्मूत्रैश्च पटुभिस्तथा ।
रसग्रासस्य जीर्णार्थं तद्बिडं परिकीर्तितम् ॥ ७६ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


सुसिद्धबीजधात्वादिजारणेन रसस्य हि ।
पीतादिरागजननं रञ्जनं परिकीर्तितम् ॥ ७७ ॥
सूते सतैलयंत्रस्थे स्वर्णादिक्षेपणं हि यत् ।
वेधाधिक्यकरं लोहे सारणा सा प्रकीर्तिता ॥ ७८ ॥
व्यवायि भेषजोपेतो द्रव्ये क्षिप्तो रसः खलु ।
वेध इत्युच्यते तज्ज्ञैः स चानेकविधः स्मृतः ॥ ७९
लेपः क्षेपश्च कुन्तश्च धूमाख्यः शब्दसंज्ञकः
लेपनं कुरुते लोहं स्वर्णं वा रजतं तथा ॥ ८० ॥
लेपवेधः स विज्ञेयः पुटमत्र च सौकरम् ।
प्रक्षेपणं द्रुते लोहे वेधः स्यात्क्षेपसंज्ञितः ॥ ८१ ॥
संदंशधृतसूतेन द्रुतद्रव्याहतिश्च या ।
सुवर्णत्वादिकरणं कुंतवेधः स उच्यते ॥ ८२ ॥
वह्नौ धूमायमानेन्तःप्रक्षिप्तरसधूमतः ।
स्वर्णाद्यापादनं लोहे धूमवेधः स उच्यते ॥ ८३ ॥
मुखस्थितरसेनाऽल्पलोहस्य धमनात्खलु ।
स्वर्णरूप्यत्वजननं शब्दवेधः स कीर्तितः ॥ ८४ ॥
सिद्धद्रव्यस्य सूतेन कालुष्यादिनिवारणम् ।
प्रकाशनं च वर्णस्य तदुद्घाटनमीरितम् ॥ ८५ ॥
क्षाराम्लैरौषधैः सार्धं भाण्डं रुद्ध्वाऽतियत्नतः ।
भूमौ निखन्यते यत्नात्स्वेदनं संप्रकीर्तितम् ॥ ८६ ॥
रसस्यौषधयुक्तस्य भाण्डरुद्धस्य यत्नतः ।
मंदाग्नियुतचुल्ल्यंतं क्षेपः संन्यास उच्यते ॥ ८७ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



द्वावेतौ स्वेदसंन्यासौ रसराजस्य निश्चितम् ।
गुणप्रभावजनकौ शीघ्रव्याप्तिकरौ तथा ॥ ८८ ॥

परिभाषाऽऽवश्यकता ।

रसनिगममहाब्धेः सोमदेवः समंता-
त्स्फुटतरपरिभाषानामरत्नानि हृत्वा ।
व्यरचयदतियत्नात्तैरिमां कण्ठमालां-
कलयति भिषगग्र्यो मण्डनार्थं सभायाम् ॥ ८९ ॥
भवेत्पठितवारोऽयमध्यायो रसवादिनाम् ।
रसकर्माणि कुर्वाणो न स मुह्यति कुत्रचित् ॥ ९० ॥

इति श्रीवाग्भटाचार्यविरचिते रसरत्नसमुच्चये अष्टमोऽध्यायः ।

---

## नवमोऽध्यायः ।

यंत्राणि ।

अथ यंत्राणि वक्ष्यंते रसतंत्राण्यशेषतः ।
समालोच्य समासेन सोमदेवेन सांप्रतम् ॥ १ ॥
स्वेदादिकर्म निर्मातुं वार्तिकेंद्रैः प्रयत्नतः ।
यंत्र्यते पारदो यस्मात्तस्माद्यंत्रमिति स्मृतम् ॥ २ ॥

दोलायंत्रम् १.

द्रवद्रव्येण भाण्डस्य पूरितार्धोदकस्य च ।
मुखस्योभयतो द्वारद्वयं कृत्वा प्रयत्नतः ॥ ३ ॥
तयोस्तु निक्षिपेद्दंडं तन्मध्ये रसपोटलीम् ॥
बद्ध्वा तु स्वेदयेदेतद्दोलायंत्रमिति स्मृतम् ॥ ४ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


स्वेदनीयंत्रम् २.

सांबुस्थालीमुखाऽऽबद्धे वस्त्रे पाक्यं निवेशयेत्।
पिधाय पच्यते यत्र स्वेदनीयंत्रमुच्यते ॥ ५ ॥

पातनायन्त्रम् ३.

अष्टांगुलपरीणाहमानाहेन दशांगुलम्।
चतुरंगुलकोत्सेधं तोयाऽऽधारं गलादधः ॥ ६ ॥
अधोभाण्डे मुखं तस्य भाण्डस्योपरिवर्तिनः।
षोडशांगुलविस्तीर्णपृष्ठस्यास्ये प्रवेशयेत् ॥ ७ ॥
पार्श्वयोर्महिषीक्षीरचूर्णमण्डूरफाणितैः।
लिप्त्वा विशोषयेत्संधिं जलाधारे जलं क्षिपेत्।
चुल्ल्यामारोपयेदेतत्पातनायंत्रमुच्यते ॥ ८ ॥

अधःपातनयंत्रम् ४.

अथोर्ध्वभाजने लिप्तस्थापितस्य जले सुधीः।
दीप्तैर्वनोपलैः कुर्यादधःपातं प्रयत्नतः ॥ ९ ॥

कच्छपयंत्रम् ५.

जलपूर्णपात्रमध्ये दत्त्वा घटखर्परं सुविस्तीर्णम्।
तदुपरि बिडमध्यगतः स्थाप्यः सूतः कृतः कोष्ठ्याम् १
लघुलोहकटोरिकया कृतषण्मृत्संधिलेपयाऽऽछाद्य।
पूर्वोक्तघटखर्परमध्येंऽगारैः खदिरकोलभवैः ॥ ११
स्वेदनतो मर्दनतः कच्छपयंत्रस्थितो रसो जरति।
अग्निबलेनैव ततो गर्भे द्रवंति सर्वसत्त्वानि ॥ १२ ॥

दीपिकायंत्रम् ६.

कच्छपयंत्रान्तर्गतमृण्मयपीठस्य दीपिकासंस्थः।
यस्मिन्निपतति सूतः प्रोक्तं तद्दीपिकायंत्रम् ॥ १३

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


डेकीयन्त्रम् ७.

भाण्डकण्ठादधश्छिद्रे वेणुनालं विनिक्षिपेत् ।
कांस्यपात्रद्वयं कृत्वा संपुटं जलगर्भितम् ॥ १४ ॥
नालिकास्यं तत्र योज्यं दृढं तच्चापि कारयेत् ॥ १५ ॥
युक्तद्रव्यैर्विनिक्षिप्तः पूर्वं तत्र घटे रसः ।
अग्निना तापितो नालात्तोये तस्मिन्पतत्यधः ॥ १६ ॥
यावदुष्णं भवेत्सर्वं भाजनं तावदेव हि ॥
जायते रससंधानं डेकीयंत्रमितीरितम् ॥ १७ ॥

जारणयंत्रम् ८.

लोहमूषाद्वयं कृत्वा द्वादशांगुलमानतः ।
ईषच्छिद्रान्वितामेकां तत्र गंधकसंयुताम् ॥ १८ ॥
मूषायां रसयुक्तायामन्यस्यां तां प्रवेशयेत् ।
तोयं स्यात्सूतकस्याध ऊर्ध्वाधो वह्निदीपनम् ॥ १९ ॥
रसोनकरसं भद्रे यत्नतो वस्त्रगालितम् ।
दापयेत्प्रचुरं यत्नादाप्लाव्य रसगंधकौ ॥ २० ॥
स्थालिकायां पिधायोर्ध्वं स्थालीमन्यां दृढां कुरु ।
संधिं विलेपयेद्यत्नान्मृदा वस्त्रेण चैव हि ॥ २१ ॥
स्थाल्यंतरे कपोताख्यं पुटं कर्षाग्निना सदा ।
यंत्रस्याधः करीषाग्निं दद्यात्तीव्राग्निमेव वा ॥ २२ ॥
एवं तु त्रिदिनं कुर्यात्ततो यंत्रं विमोचयेत् ।
तप्तोदके तप्तचुल्ल्यां न कुर्याच्छीतलां क्रियाम् ॥ २३ ॥
न तत्र क्षीयते सूतो न गच्छति च कुत्रचित् ।
अनेन च क्रमेणैव कुर्याद्गंधकजारणम् ॥ २४ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


विद्याधरयंत्रम् ९.

यंत्रं विद्याधरं ज्ञेयं स्थालीद्वितयसंपुटात् ।
चुल्लीं चतुर्मुखीं कृत्वा यंत्रभांडं निवेशयेत् ॥ २५ ॥
तत्रौषधं विनिक्षिप्य निरुंध्याद्भाण्डकाननम् ।
यंत्रं विद्याधरं नाम तंत्रज्ञैः परिकीर्तितम् ॥ २६ ॥

सोमानलयंत्रम् १०.

ऊर्ध्वं वह्निरधश्चाऽऽपो मध्ये तु रससंग्रहः ।
सोमानलमिदं प्रोक्तं जारयेद्गंधकादिकम् ॥ २७ ॥

गर्भयंत्रम् ११.

गर्भयंत्रं प्रवक्ष्यामि पिष्टिकाभस्मकारकम् ।
चतुरंगुलदीर्घां च त्र्यंगुलोन्मितविस्तराम् ॥ २८ ॥
मृण्मयीं सुदृढां मूषां वर्तुलं कारयेन्मुखम् ।
लोहस्य विंशतिर्भागा भाग एकस्तु गुग्गुलोः ॥ २९
सुश्लक्ष्णं पेषयित्वा तु वारं वारं प्रयत्नतः ।
मूषालेपं दृढं कृत्वा लवणार्धमृदंबुभिः ॥ ३० ॥
करीषतुषाग्निना भूमौ स्वेदयेन्मृदुमानवित् ।
अहोरात्रं त्रिरात्रं वा रसेंद्रो भस्मतां व्रजेत् ॥ ३१ ॥

हंसपाकयन्त्रम् १२.

खर्परं सिकतापूर्णं कृत्वा तस्योपरि न्यसेत् ।
अपरं खर्परं तत्र शनैर्मृद्वग्निना पचेत् ॥ ३२ ॥
पंचक्षारैस्तथा मूत्रैर्लवणं च बिडं ततः ।
हंसपाकं समाख्यातं यंत्रं तद्वार्तिकोत्तमैः ॥ ३३ ॥

वालुकायंत्रम् १३.

सरसां गूढवक्त्रां मृद्वस्त्रांगुलघनावृताम् ।
शोषितां काचकलशीं पूरयेत्त्रिषु भागयोः ॥ ३४ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


भाण्डे वितस्तिगंभीरे वालुकासु प्रतिष्ठितम् ।
तद्भाण्डं पूरयेत्त्रिभिरन्याभिरवगुंठयेत् ॥ ३५ ॥
भाण्डवक्त्रं माणिकया संधिं लिंपेन्मृदा पचेत् ।
चुल्यां तृणस्य चाऽऽदाहान्माणिकापृष्ठवर्तिनः ॥ ३६ ॥
एतद्धि वालुकायंत्रं तद्यंत्रं लवणाश्रयम् ।
पंचाढवालुकापूर्णभाण्डे निक्षिप्य यत्नतः ।
पच्यते रसगोलाद्यं वालुकायंत्रमीरितम् ॥ ३७ ॥

लवणयंत्रम् १४.

एवं लवणनिक्षेपात्प्रोक्तं लवणयंत्रकम् ॥ ३८ ॥
अंतःकृतरसालेपताम्रपात्रमुखस्य च ।
लित्वा मृल्लवणेनैव संधिं भाण्डतलस्य च ।
तद्भाण्डं पटुना पूर्यं क्षारैर्वा पूर्ववत्पचेत् ॥ ३९ ॥
एवं लवणयंत्रं स्याद्रसकर्माणि शस्यते ॥ ४० ॥

नालिकायंत्रम् १५.

लोहनालगतं सूतं भाण्डे लवणपूरिते ।
निरुद्धं विपचेत्प्राग्वन्नालिकायंत्रमीरितम् ॥ ४१ ॥

भूधरयंत्रम् १६.

वालुकागूढसर्वांगां गर्ते मूषां रसान्विताम् ।
दीप्तोपलैः संवृणुयाद्यंत्रं तद्भूधराह्वयम् ॥ ४१ ॥

पुटयंत्रम् १७.

शरावसंपुटान्तस्थं करीषेष्वग्निमानवित् ।
पचेच्चुल्ल्यां द्वियामं वा रसं तत्पुटयंत्रकम् ॥ ४२ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri

कोष्ठीयंत्रम् १८.

षोडशांगुलविस्तीर्णं हस्तमात्रायतं समम् ।
धातुसत्त्वनिपातार्थं कोष्ठीयंत्रमिति स्मृतम् ॥ ४४ ॥

वलभीयंत्रम् १९.

यत्र लोहमये पात्रे पार्श्वयोर्वलयद्वयम् ।
तादृक् स्वल्पतरं पात्रं वलयप्रोतकोष्ठकम् ॥ ४५ ॥
पूर्वपात्रोपरि न्यस्य स्वल्पपात्रे परिक्षिपेत् ।
रसं संमूर्छितं स्थूलपात्रमापूर्य कांजिकैः ।
द्वियामं स्वेदयेदेवं रसोत्थापनहेतवे ॥ ४६ ॥
एतत्स्याद्वलभीयंत्रं रसषाड्गुण्यकारकम् ।
सूक्ष्मकांतमये पात्रे रसः स्याद्गुणवत्तरः ॥ ४७ ॥

तिर्यक् पातनयंत्रम् २०.

क्षिपेद्रसं घटे दीर्घे नताधोनालसंयुते ।
तन्नालं निक्षिपेदन्यघटकुक्ष्यंतरे खलु ॥ ४८ ॥
तत्र रुद्ध्वा मृदा सम्यग्वदने घटयोरधः ।
अधस्ताद्रसकुंभस्य ज्वालयेत्तीव्रपावकम् ॥ ४९ ॥
इतरस्मिन्घटे तोयं प्रक्षिपेत्स्वादु शीतलम् ।
तिर्यक्पातनमेतद्धि वार्तिकैरभिधीयते ॥ ५० ॥

पालिकायंत्रम् २१.

चषकं वर्तुलं लौहं विनताग्रोर्ध्वदण्डकम् ।
एतद्धि पालिकायंत्रं बलिजारणहेतवे ॥ ५१ ॥

घटयंत्रम् २२.

चतुष्प्रस्थजलाधारश्चतुरंगुलिकाननः ।
घटयंत्रमिदं प्रोक्तं तदाप्यायनकं स्मृतम् ॥ ५२ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


इष्टिकायंत्रम् २३.

विधाय वर्तुलं गर्तं मल्लमत्र निधाय च ।
विनिधायेष्टिकां तत्र मध्यगर्तवर्तीं शुभाम् ॥ ५३ ॥
गर्तस्य परितः कुर्यात्पालिकामंगुलोच्छ्रयाम् ।
गर्ते सूतं विनिक्षिप्य गर्तास्ये वसनं क्षिपेत् ॥ ५४ ॥
निक्षिपेद्गन्धकं तत्र मल्लेनास्यं निरुध्य च ।
मल्लपालिकयोर्मध्ये मृदा सम्यङ् निरुध्य च ॥ ५५ ॥
वनोत्पलैः पुटं देयं कपोताख्यं न चाधिकम् ।
इष्टिकायंत्रमेतत्स्याद्गंधकं तेन जारयेत् ॥ ५६ ॥

हिंगुलाकृष्टिविद्याधरयन्त्रम् २४.

स्थालिकोपरि विन्यस्य स्थालीं सम्यङ् निरुध्य च ।
ऊर्ध्वस्थाल्यां जलं क्षिप्त्वा वह्निं प्रज्वालयेदधः ॥ ५७ ॥
एतद्विद्याधरं यंत्रं हिंगुलाऽऽकृष्टिहेतवे ॥ ५८ ॥

डमरुयंत्रम् २५.

यंत्रस्थाल्युपरि स्थालीं न्युब्जां दत्त्वा निरुंधयेत् ।
यंत्रं डमरुकाख्यं तद्रसभस्मकृते हितम् ॥ ५९ ॥

नाभीयंत्रम् २६.

मल्लमध्ये चरेद्गर्तं तत्र सूतं सगंधकम् ।
गर्तस्य परितः कुडयं प्रकुर्यादंगुलोच्छ्रितम् ॥ ६० ॥
ततश्चाच्छादयेत्सम्यग्गोस्तनाकारमूषया ।
सम्यक् तोयमृदा रुद्धा सम्यगत्रोच्यमानया ॥ ६१ ॥
"लेहवत्कृतबब्बूलक्काथेन परिमर्दितम् ।"
"जीर्णकिट्टरजः सूक्ष्मं गुडचूर्णसमन्वितम् ।"


CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


"इयं हि जलमृत्प्रोक्ता दुर्भेद्या सलिलैः खलु ॥ ६२
"खटिका पट्टकिट्टैश्च माहिषीदुग्धमर्दितैः"
"वह्निमृत्स्ना भवेद्घोरवह्नितापसहा खलु ॥ ६३ ॥"
"एतया मृत्स्नया रुद्धो न गंतुं क्षमते रसः"
"विदग्धवनिताप्रौढप्रेम्णा रुद्धः पुमानिव ॥ ६४ ॥"
"नंदी नागार्जुनश्चैव ब्रह्मज्योतिर्मुनीश्वरः"
"वेत्ति श्रीसोमदेवश्च नापरः पृथिवीतले ॥ ६५ ॥"
ततो जलं विनिक्षिप्य वह्निं प्रज्वालयेदधः ।
नाभियंत्रमिदं प्रोक्तं नंदिना सर्ववेदिना ॥ ६६ ॥
अनेन जीर्यते सूतो निर्धूमः शुद्धगंधकः ॥ ६७ ॥

ग्रस्तयन्त्रम् २७.

मूषां मूषोदराविष्टामाद्यंतसमवर्तुलाम् ।
चिपिटां च तले प्रोक्तं ग्रस्तयंत्रं मनीषिभिः ।
सूतेंद्ररंध्रणार्थं हि रसविद्भिरुदीरितम् ॥ ६८ ॥

स्थालीयंत्रम् २८.

स्थाल्यां ताम्रादि निक्षिप्य मल्लेनास्यं निरुद्ध्य च ।
पच्यते स्थालिकाधस्तात्स्थालीयंत्रमिदं स्मृतम् ॥६

धूपयंत्रम् २९.

विधायाष्टांगुलं पात्रं लौहमष्टांगुलोच्छ्रयम् ।
कण्ठाधो द्व्यंगुले देशे जलाधारं हि तत्र च ॥ ७० ॥
तिर्यग्लोहशलाकाश्च तन्वीस्तिर्यग्विनिक्षिपेत् ।
तनूनि स्वर्णपत्राणि तासामुपरि विन्यसेत् ॥ ७१ ॥
पत्राधो निक्षिपेद्धूमं वक्ष्यमाणमिहैव हि ।
तत्पत्रं न्युब्जपात्रेण च्छादयेदपरेण हि ॥ ७२ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



मृदा विलिप्य संधिं च वह्निं प्रज्वालयेदधः ।
तेन पत्राणि कृष्णानि हतान्युक्तविधानतः ॥ ७३ ॥
रसश्चरति वेगेन द्रुतं गर्भे द्रवंति च ।
गंधालकशिलानां हि कज्जल्या वा मृताऽहिना ॥ ७४ ॥
धूपनं स्वर्णपत्राणां प्रथमं परिकीर्तितम् ।
तारार्थं तारपत्राणि मृतवङ्गेन धूपयेत् ॥ ७५ ॥
धूपयेच्च यथायोग्यैरन्यैरुपरसैरपि ।
धूपयंत्रमिदं प्रोक्तं जारणाद्रवसाधने ॥ ७६ ॥

कंदुकयंत्रम् ३०.

स्थूलस्थाल्यां जलं क्षिप्त्वा वासो बद्ध्वा मुखे दृढम् ।
तत्र स्वेद्यं विनिक्षिप्य तन्मुखं प्रपिधाय च ॥ ७७ ॥
अधस्ताज्ज्वालयेदग्निं यंत्रं तत्कंदुकाऽभिधम् ।
स्वेदनीयंत्रमित्यन्ये प्राहुरन्ये मनीषिणः ॥ ७८ ॥
यद्वा स्थाल्यां जलं क्षिप्त्वा तृणं क्षिप्त्वा मुखोपरि ।
स्वेद्यद्रव्यं परिक्षिप्य पिधानं प्रपिधाय च ॥ ७९ ॥
अधस्ताज्ज्वालयेदग्निं यंत्रं तत्कंदुकं स्मृतम् ॥ ८० ॥

खल्वयंत्रम् ३१.

खल्वयोग्या शिला नीला श्यामा स्निग्धा दृढा गुरुः ।
षोडशाङ्गुलकोत्सेधा नवाङ्गुलकविस्तरा ॥ ८१ ॥
चतुर्विंशाङ्गुला दीर्घा घर्षणी द्वादशाङ्गुला ।
खल्वप्रमाणं तज्ज्ञेयं श्रेष्ठं स्याद्रसकर्मणि ॥ ८२ ॥
खल्वयंत्रं त्रिधा प्रोक्तं रसादिसुखमर्दने ।
निरुद्गारौ सुमसृणौ कार्यौ पुत्रिकया युतौ ॥ ८३ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


उत्सेधे स दशाङ्गुलः खलु कलातुल्यांगुलायामवा-
न्विस्तारेण दशांगुलो मुनिमितैर्निम्नस्तथैवाङ्गुलैः ॥
पाल्यां द्व्यंगुलविस्तरश्च मसृणोतीवाऽर्धचंद्रोपमो
घर्षो द्वादशकाङ्गुलश्च तदयं खल्वो मतः सिद्धये॥८४
अस्मिन्पंचपलः सूतो मर्दनीयो विशुद्धये ।
तत्तदौचित्ययोगेन खल्वेष्वन्येषु योजयेत् ॥ ८५ ॥
द्वादशाङ्गुलविस्तारः खल्वोऽतिमसृणोपलः ।
चतुरङ्गुलनिम्नश्च मध्येतिमसृणीकृतः ॥ ८६ ॥
मर्दकश्चिपिटोऽधस्तात्सुग्राहश्च शिखोपरि ।
अयं तु वर्तुलः खल्वो मर्दनेऽतिसुखप्रदः ॥ ८७ ॥
लौहो नवाङ्गुलश्चैव निम्नत्वे च षडङ्गुलः ।
मर्दकोऽष्टांगुलश्चैव तप्तखल्वाभिधोऽप्ययम् ॥ ८८ ॥
कृत्वा खल्वाकृतिं चुल्लीमंगारैः परिपूरिताम् ।
तस्यां निवेश्य तं खल्वं पार्श्वे भस्त्रिकया धमेत्॥ ८९
तदंतर्मर्दिता पिष्टिः क्षारैरम्लैश्च संयुता ।
प्रद्रवत्यतिवेगेन स्वेदिता नात्र संशयः ॥ ९० ॥
कृतः कांतायसा सोऽयं भवेत्कोटिगुणो रसः ॥ ९१
इति श्रीवाग्भटाचार्यविरचिते रसरत्नसमुच्चये नवमोऽध्यायः ।

## दशमोऽध्यायः ।

### मूषा, कोठी, पुट, औषधीग्रहणपरिभाषाः ।

#### मूषा ।

मूषा हि क्रौंचिका प्रोक्ता कुमुदी करहाटिका ।
पाचनी वह्निमित्रा च रसवादिभिरीर्यते ॥ १ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


मुष्णाति दोषान्मूषे या सा मूषेति निगद्यते ।
उपादानं भवेत्तस्या मृत्तिका लोहमेव च ॥ २ ॥
मूषामुखविनिष्क्रांता वरमेकाऽपि काकिनी ।
दुर्जनप्रणिपातेन धिग्लक्षमपि मानिनाम् ॥ ३ ॥
मूषापिधानयोर्बंधे बंधनं संधिलेपनम् ।
अंध्रणं रंध्रणं चैव संश्लिष्टं संधिलेपनम् ॥ ४ ॥
मृत्तिका पाण्डुरस्थूला शर्करा शोणपाण्डुरा ।
चिराध्मानसहा सा हि मूषार्थमतिशस्यते ।
तदभावे च वाल्मीकी कौलाली वा समीर्यते ॥ ५ ॥

या मृत्तिका दग्धतुषैः शणेन
शिखित्रकैर्वा हयलादिना च ।
लौहेन दण्डेन च कुट्टिता सा
साधारणा स्यात्खलु मूषिकार्थे ॥ ६ ॥

श्वेताश्मानस्तुषा दग्धाः शिखित्राः शणखर्परौ ।
लद्दिः किट्टं कृष्णमृत्स्ना संयोज्या मूषिकामृदि ॥ ७ ॥

वज्रमूषा १.

मृदास्त्रिभागाः शणलद्दिभागौ
भागश्च निर्दग्धतुषोपलादेः ।
किट्टार्धभागं परिखण्ड्य वज्र-
मूषां विदध्यात्खलु सत्त्वपाते ॥ ८ ॥

योगमूषा २.

दग्धांगारतुषोपेता मृत्स्ना वल्मीकमृत्तिका ।
तद्वद्भिडसमायुक्ता तद्वद्भिडविलेपिता ॥ ९ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


तया या विहिता मूषा योगमूषेति कथ्यते ।
अनया साधितः सूतो जायते गुणवत्तरः ॥ १० ॥

वज्रद्रावणीमूषा ३.

गारभूनागधौताभ्यां शणैर्दग्धतुषैरपि ।
समैः समा च मूषामृन्महिषीदुग्धमर्दिता ॥ ११ ॥
क्रौंचिकायंत्रमात्रं हि बहुधा परिकीर्तिता ।
तया विरचिता मूषा वज्रद्रावणिकेरिता ॥ १२ ॥

गारमूषा ४.

दुग्धं षड्गुणगाराढ्या किट्टांगारशणान्विता ।
कृष्णमृद्भिः कृता मूषा गारमूषेत्युदाहृता ॥ १३ ॥
यामयुग्मपरिध्मानान्नासौ द्रवति वह्निना ॥ १४ ॥

वरमूषा ५.

वज्रांगारतुषास्तुल्यास्तच्चतुर्गुणमृत्तिका ।
गारश्च मृत्तिकातुल्यः सर्वैरेतैर्विनिर्मिता ।
वरमूषेति निर्दिष्टा याममग्निं सहेत सा ॥ १५ ॥

वर्णमूषा ६.

पाषाणरहिता रक्ता रक्तवर्गांबुसाधिता ।
मृत्तया साधिता मूषा क्षितिखेचरलेपिता ।
वर्णमूषेति सा प्रोक्ता वर्णोत्कर्षे नियुज्यते ॥ १६ ॥

रूप्यमूषा ७.

पाषाणरहिता श्वेता श्वेतवर्गांबुसाधिता ।
मृत्तया साधिता मूषा क्षितिखेचरलेपिता ।
रूप्यमूषेति सा प्रोक्ता श्वेतवर्णाय युज्यते ॥ १७ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


विडमूषा ८.

तत्तद्विडसमुद्भूता तत्तद्विडविलेपिता ।
देहलोहार्थयोगार्थं विडमूषेत्युदाहृता ॥ १८ ॥

वज्रद्रावणमूषा ९.

गारभूनागधौताभ्यां तुषमष्टगुणेन च ।
समैः समा च मूषामृन्महिषीदुग्धमर्दिता ॥ १९ ॥
क्रौंचिकायंत्रमात्रा हि बहुधा परिकीर्तिता ।
तया विरचिता मूषा लिप्ता मत्कुणशोणितैः ॥ २० ॥
बालाऽब्दध्वनिमूलैश्च वज्रद्रावणक्रौंचिका ।
सहतेऽग्निं चतुर्यामं द्रवेणाऽऽपूरिता सती ॥ २१ ॥

वृंताकमूषा १०.

वृंताकाकारमूषायां नालं द्वादशकांगुलम् ॥ २२ ॥
धत्तूरपुष्पवच्चोर्ध्वं सुदृढं श्लिष्टपुष्पवत् ।
अष्टांगुलं च सच्छिद्रं सा स्याद्वृन्ताकमूषिका ॥ २३ ॥
अनया खर्परादीनां मृदूनां सत्त्वमाहरेत् ॥ २४ ॥

गोस्तनीमूषा ११.

मूषा या गोस्तनाकारा शिखायुक्तपिधानका ।
सत्त्वानां द्रावणे शुद्धौ मूषा सा गोस्तनी भवेत् ॥२५॥

मल्लमूषा १२.

निर्दिष्टा मल्लमूषा या मल्लद्वितयसंपुटात् ।
पर्पट्यादिरसादीनां स्वेदनाय प्रकीर्तिता ॥ २६ ॥

पक्वमूषा १३.

कुलालभाण्डरूपा या दृढा च परिपाचिता ।
पक्वमूषेति सा प्रोक्ता पोटल्यादिविपाचने ॥ २७ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


गोलमूषा १४.

निर्वक्रगोलकाऽऽकारा पुटनद्रव्यगर्भिणी ।
गोलमूषेति सा प्रोक्ता सत्वरं द्रव्यशोधिनी ॥ २८ ॥

महामूषा १५.

तले या कूर्पराकारा क्रमादुपरि विस्तृता ।
स्थूलवृंत्ताकवत्स्थूला महामूषेत्यसौ स्मृता ॥ २९ ॥
सा चायोभ्रकसत्त्वादेः पुटाय द्रावणाय च ॥ ३० ॥

मंडूकमूषा १६.

मंडूकाऽऽकारमूषा या निम्नताऽऽयामविस्तरा ।
षडंगुलप्रमाणेन मूषा मण्डूकसंज्ञका ॥ ३१ ॥
भूमौ निखन्य तां मूषां दद्यात्पुटमथोपरि ॥ ३२ ॥

मुसलाख्यामूषा १७.

मूषा या चिपिटा मूले वर्तुलाऽष्टांगुलोच्छ्रया ।
मूषा सा मुसलाख्या स्याच्चक्रबद्धरसे हिता ॥ ३३ ॥

मूषाऽऽप्यायनम् ।

द्रवे द्रवीभावमुखे मूषाया ध्मानयोगतः ।
क्षणमुद्धरणं यत्तन्मूषाप्यायनमुच्यते ॥ ३४ ॥

कोष्ठी ।

सत्त्वानां पातनार्थाय पातितानां विशुद्धये ।
कोष्ठिका विविधाकारास्तासां लक्षणमुच्यते ॥ ३५ ॥

अङ्गारकोष्ठी १.

राजहस्तसमुत्सेधा तदर्धायामविस्तरा ।
चतुरस्रा च कुडचेन वेष्टिता मृण्मयेन च ।
एकभित्तौ चरेद्द्वारं वितस्त्याभोगसंयुतम् ॥ ३६ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


द्वारं सार्धवितस्त्या च संमितं सुदृढं शुभम् ।
देहल्यधो विधातव्यं धमनाय यथोचितम् ।
प्रादेशप्रमिता भित्तिरुत्तरङ्गस्य चोर्ध्वतः ॥ ३७ ॥
द्वारं चोपरि कर्तव्यं प्रादेशप्रमितं खलु ।
ततश्चेष्टिकया रुद्ध्वा द्वारसंधिं विलिप्य च ।
शिखित्रैस्तां समापूर्य धमेद् भस्त्राद्वयेन च ॥ ३८ ॥
शिखित्रान्धमनज्ञ्यमूर्ध्वद्वारेण निक्षिपेत् ।
सत्त्वपातनगोलांश्च पञ्च पञ्च पुनः पुनः ।
भवेदङ्गारकोष्ठीयं खराणां सत्त्वपातिनी ॥ ३९ ॥

पातालकोष्ठी २.

दृढभूमौ चरेद्गर्तं वितस्त्या संमितं शुभम् ।
वर्तुलं चाथ तन्मध्ये गर्तमन्यं प्रकल्पयेत् ॥ ४० ॥
चतुरंगुलविस्तारनिम्नत्वेन समन्वितम् ।
गर्ताद्बहिर्णिपर्यंतं तिर्यङ्नालसमन्वितम् ॥ ४१ ॥
किंचित्समुन्नतं बाह्ये गर्ताभिमुखनिम्नगम् ।
मृच्चक्रीं पंचरंध्राढ्यां गर्भगर्तोदरे क्षिपेत् ॥ ४२ ॥
आपूर्य कोकिलैः कोष्ठीं प्रधमेदेकभस्त्रया ।
पातालकोष्ठिका ह्येषा मृदूनां सत्त्वपातिनी ॥ ४३ ॥
ध्मानसाध्यपदार्थानां नंदिना परिकीर्तिता ॥ ४४ ॥

गारकोष्ठी ३.

द्वादशांगुलनिम्ना या प्रादेशप्रमिता तथा ।
चतुरंगुलतश्चोर्ध्वं वलयेन समन्विता ।
भूरिच्छिद्रवतीं कोष्ठीं वलयोपरि निक्षिपेत् ॥ ४५ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


शिखित्रांस्तत्र निक्षिप्य प्रधमेद्वंकनालतः ।
गारकोष्ठीयमाख्याता मृष्टलोहविनाशिनी ॥ ४६ ॥
मूषामृद्भिर्विधातव्यमरत्निप्रमितं दृढम् ।
अधोमुखं च तद्वक्रे नालं पंचांगुलं खलु ।
वंकनालमिति प्रोक्तं दृढध्मानाय कीर्तितम् ॥ ४७ ॥

मूषाकोष्ठी ।

कोष्ठी सिद्धरसादीनां विधानाय विधीयते ॥ ४८ ॥
द्वादशांगुलकोत्सेधा सा बुध्ने चतुरंगुला ।
तिर्यक्प्रधमना स्याच्च मृदुद्रव्यविशोधिनी ॥ ४९ ॥

पुटम् ।

रसादिद्रव्यपाकानां प्रमाणज्ञापनं पुटम् ।
नेष्टो न्यूनाधिकः पाकः सुपाकं हितमौषधम् ॥ ५०
लोहादेरपुनर्भावो गुणाधिक्यं ततोऽग्रता ।
अनप्सु मज्जनं रेखापूर्णता पुटतो भवेत् ॥ ५१ ॥
पुटाद् ग्राव्णो लघुत्वं च शीघ्रव्याप्तिश्च दीपनम् ।
जारितादपि सूतेंद्राल्लोहानामधिको गुणः ॥ ५२ ॥
यथाश्मनि विशेद्वह्निर्बहिस्थपुटयोगतः ।
चूर्णत्वाद्धि गुणाऽऽवाप्तिस्तथा लोहेषु निश्चितम् ॥५३

महापुटम् १.

निम्ने विस्तरतः कुंडे द्विहस्ते चतुरस्रके ।
वनोत्पलसहस्रेण पूरिते पुटनौषधम् ॥ ५४ ॥
क्रौंच्यां रुद्धं प्रयत्नेन पिष्टिकोपरि निक्षिपेत् ।
वनोत्पलसहस्रार्धं क्रौंचिकोपरि विन्यसेत् ।
वह्निं प्रज्वालयेत्तत्र महापुटमिदं स्मृतम् ॥ ५५ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


गजपुटम् २.

राजहस्तप्रमाणेन चतुरस्रं च निम्नकम् ॥ ५६ ॥
पूर्णं चोपलसाठीभिः कंठावध्यथ विन्यसेत् ॥
विन्यसेत्कुमुदीं तत्र पुटनद्रव्यपूरिताम् ॥ ५७ ॥
पूर्वाच्छगणतोर्धानि गिरिण्डानि विनिक्षिपेत् ।
एतद्गजपुटं प्रोक्तं महागुणविधायकम् ॥ ५८ ॥

वाराहपुटम् ३.

इत्थं चाऽरत्निके कुण्डे पुटं वाराहमुच्यते ॥ ५९ ॥

कुक्कुटपुटम् ४.

पुटं भूमितले यत्तद्वितस्तिद्वितयोच्छ्रयम् ।
तावच्च तलविस्तीर्णं तत्स्यात्कुक्कुटकं पुटम् ॥ ६० ॥

कपोतपुटम् ५.

यत्पुटं दीयते भूमावष्टसंख्यैर्वनोत्पलैः ।
बद्धा सूतकभस्मार्थं कपोतपुटमुच्यते ॥ ६१ ॥

गोवरपुटम् ६.

गोष्ठांतर्गोक्षुरक्षुण्णं शुष्कं चूर्णितगोमयम् ।
गोवरं तत्समादिष्टं वरिष्टं रससाधने ॥ ६२ ॥
गोवरैर्वा तुषैर्वापि पुट यत्र प्रदीयते ।
तद्गोवरपुटं प्रोक्तं सिद्धये रसभस्मनः ॥ ६३ ॥

भाण्डपुटम् ७.

स्थूलभाण्डे तुषापूर्णे मध्ये मूषासमन्विते ।
वह्निना विहिते पाके तद्भाण्डपुटमुच्यते ॥ ६४ ॥

वालुकापुटम् ८.

अधस्तादुपरिष्टाच्च क्रौंचिकाऽऽच्छाद्यते खलु ॥
वालुकाभिः प्रतप्ताभिर्यत्र तद्वालुकापुटम् ॥ ६५ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


भूधरपुटम् ९.

वह्निमित्रां क्षितौ सम्यङ् निखन्याद्द्व्यंगुलादधः ॥
उपरिष्टात्पुटं यत्र पुटं तद्भूधराह्वयम् ॥ ६६ ॥

लावकपुटम् १०

ऊर्ध्वं षोडशिकामात्रैस्तुषैर्वा गोवरैः पुटम् ॥
यत्र तल्लावकाख्यं स्यात्सुमृदुद्रव्यसाधने ॥ ६७ ॥
अनुक्तपुटमाने तु साध्यद्रव्यबलाबलात् ॥
पुटं विज्ञाय दातव्यमूहापोहविचक्षणः ॥ ६८ ॥

औषधीग्रहणपरिभाषा ।

पिष्टकं छगणं छाणमुत्पलं चोपलं तथा ।
गिरिण्डोपलसाठी च वराटी छगणाभिधाः ॥ ६९ ॥
सुवर्णं रजतं ताम्रं त्रपु सीसकमायसम् ।
षडेतानि च लोहानि कृत्रिमौ कांस्यपित्तलौ ॥ ७०
लवणानि षडुच्यंते सामुद्रं सैंधवं बिडम् ।
सौवर्चलं रोमकं च चूलिकालवणं तथा ॥ ७१ ॥
क्षारत्रयं समाख्यातं यवसर्जिकटंकणम् ।
पलाशमुष्ककक्षारौ यवक्षारः सुवर्चिका ।
तिलनालोद्भवः क्षारः संयुक्तं क्षारपंचकम् ॥ ७२ ॥
घृतं गुडो माक्षिकं च विज्ञेयं मधुरत्रयम् ॥ ७३ ॥
कंगुणी तुंबिनी घोषा करीरः श्रीफलोद्भवम् ।
कटुवार्ताकसिद्धार्थसोमराजीबिभीतजम् ।
अतसीजं महाकालीनिंबजं तिलजं तथा ॥ ७४ ॥
अपामार्गदेवदालीदंतीतुंबुरुविग्रहात् ।
अंकोलोन्मत्तभल्लातपलाशेभ्यस्तथैव च ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


एतेभ्यस्तैलमादाय रसकर्मणि योजयेत् ॥ ७५ ॥
जंबूकमंडूकवसा वसा कच्छपसंभवा ।
कर्कोटी शिशुमारी च गोसूकरनरोद्भवा ॥ ७६ ॥
अजोष्ट्रखरमेषाणां महिषस्य वसा तथा ॥ ७७ ॥
मूत्राणि हस्तिकरभमहिषीखरवाजिनाम् ।
गोजावीनां स्त्रियः पुंसां पुष्पं बीजं तु योजयेत् ॥७८॥
महिषांबु दधि क्षीरं साभिघारं शकृद्रसः ।
तत्पंचमाहिषं ज्ञेयं तद्वच्छागलपंचकम् ॥ ७९ ॥
अम्लवेतसजंबीरनिंबुकं बीजपूरकम् ।
चांगेरी चणकाम्लं च अम्लिकंकोलदाडिमम् ॥ ८० ॥
अंबष्टा तिंतिणीकं च नारंगं रसपत्रिका ।
करवंदं तथा चान्यदम्लवर्गः प्रकीर्तितः ॥ ८१ ॥
चणकाम्लश्च सर्वेषामेक एव प्रशस्यते ॥ ८२ ॥
अम्लवेतसमेकं वा सर्वेषामुत्तमोत्तमम् ।
रसादीनां विशुद्ध्यर्थं द्रावणे जारणे हितम् ॥ ८३ ॥
कोलदाडिमवृक्षाम्लचुल्लिकाचुक्रिकारसम् ।
पंचाम्लकं समुद्दिष्टं तच्चोक्तं चाम्लपंचकम् ॥ ८४ ॥
इष्टिका गैरिका लोणं भस्म वल्मीकमृत्तिका ।
रसप्रयोगकुशलैः कीर्तिताः पंच मृत्तिकाः ॥ ८५ ॥
शृंगीकं कालकूटं च वत्सनाभं सकृत्रिमम् ।
पीतं च विषवर्गोऽयं स वरः परिकीर्तितः ॥ ८६ ॥
रसकर्मणि शस्तोऽयं तद्बंधनविधावपि ।
अयुक्त्या सेवितश्चायं मारयत्येव निश्चितम् ॥ ८७ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


लांगली विषमुष्टिश्च करवीरो जया तथा ।
नीलकः कनकोऽर्कश्च वर्गो ह्युपविषात्मकः ॥ ८८॥
हस्त्यश्वी वनिता धेनुर्गर्दभी छागिकाऽऽविका ।
उष्ट्रिकोदुंबराश्वत्थभानुन्यग्रोधतिल्वकम् ॥ ८९ ॥
दुग्धिका स्नुग्गणं चैतत्तथैवोत्तमकार्णिका ।
एषां दुग्धैर्विनिर्दिष्टो दुग्धवर्गो रसादिषु ॥ ९० ॥
पारावतस्य चाषस्य कपोतस्य कलापिनः ।
गृध्रस्य कुक्कुटस्यापि विनिर्दिष्टो हि विड्गणः ।
शोधनं सर्वलोहानां पुटनाल्लेपनात्खलु ॥ ९१ ॥
कुसुंभं खदिरो लाक्षा मंजिष्ठा रक्तचंदनम् ॥ ९२ ॥
अक्षी च बंधुजीवश्च तथा कर्पूरगंधिनी ।
माक्षिकं चेति विज्ञेयो रक्तवर्गोऽतिरंजनः ॥ ९३ ॥
किंशुकः कर्णिकारश्च हरिद्राद्वितयं तथा ।
पीतवर्गोऽयमादिष्टो रसराजस्य कर्मणि ॥ ९४ ॥
तगरः कुटजः कुंदो गुञ्जा जीवंतिका तथा ।
सिताऽम्भोरुहकंदश्च श्वेतवर्ग उदाहृतः ॥ ९५ ॥
कदली कारवल्ली च त्रिफला नीलिकाऽनलः ।
पंकः कासीसबालाम्रं कृष्णवर्ग उदाहृतः ॥ ९६ ॥
रक्तवर्गादिवर्गैश्च द्रव्यं यज्जारणात्मकम् ।
भावनीयं प्रयत्नेन तादृग्रागाप्तये खलु ॥ ९७ ॥
काचटंकणशिग्राभिः शोधनीयो गणो मतः ।
सत्त्वानां बद्धसूतस्य लोहानां मलनाशनः ।
कापालिकगणध्वंसी रसवादिभिरुच्यते ॥ ९८ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


महिषीमेढ्रांडगर्भः कालिंगो धवबीजयुक् ।
शशास्थीनि च वर्गोऽयं लोहकाठिन्यनाशनः ॥ ९९ ॥
गुडगुग्गुलुगुंजाऽऽज्यसारघैष्टंकणाऽन्वितैः ।
दुर्द्रावाऽखिललोहादेर्द्रावणाय गणो मतः ॥ १०० ॥
क्षाराः सर्वे मलं हन्युरम्लं शोधनजारणम् ।
मांद्यं विषाणि निघ्नंति स्नैग्ध्यं स्नेहाः प्रकुर्वते ॥१०१॥

परिमाणम ।

षट्त्रुटचश्चैकलिक्षा स्यात् षड्लिक्षा यूकमुच्यते ।
षड्यूकास्तु रजःसंज्ञं निबोध त्वं च सुव्रते ॥ १०२ ॥
षड्रजः सर्षपः स स्यात्सिद्धार्थः स च कीर्तितः॥१०३॥
षट्सिद्धार्थेन देवेशि यवस्त्वेकः प्रकीर्तितः ।
षड्यवैरेकगुंजा स्यात्त्रिगुंजो वल्ल उच्यते ॥ १०४ ॥
षड्भिरेव तु गुंजाभिर्माष एकः प्रकीर्तितः ।
माषा षोडश तोलः स्याच्चतुस्तोलैः पलं भवेत् ॥१०५

इति श्रीवाग्भटाचार्यविरचिते रससरत्नसमुच्चये दशमोऽध्यायः ॥

---

# एकादशोऽध्यायः ।

## रसशोधनादिकथनम् ।

### मानपरिभाषा ।

त्रुटिः स्यादणुभिः षड्भिस्तैर्लिक्षा षड्भिरीरिता ।
ताभिः षड्भिर्भवेद्यूकः षड्यूकास्तद्रजः स्मृतम् ॥ १ ॥
षड्रजः सर्षपः प्रोक्तस्तैः षड्भिर्यव ईरितः ।
एका गुंजा यवैः षड्भिर्निष्पावस्तु द्विगुंजकः ॥ २ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


स्याद् गुंजात्रितयं वल्लो द्वौ वल्लौ माष उच्यते ।
द्वौ माषौ धरणं ते द्वे शाणनिष्ककलाः स्मृताः ॥ ३
निष्कद्वयं तु वटकः स च कोल इतीरितः ।
स्यात्कोलद्वितयं तोलः कर्षो निष्कचतुष्टयम् ॥ ४ ॥
उदुंबरं पाणितलं सुवर्णं कवलग्रहः ।
अक्षं बिडालपदकं शुक्तिः पाणितलद्वयम् ॥ ५ ॥
शुक्तिद्वयं पलं केचिदन्ये शुक्तित्रयं विदुः ।
तदेव कथितं मुष्टिः प्रकुंचो बिल्वमित्यपि ॥ ६ ॥
पलद्वयं तु प्रसृतं तद्द्वयं कुडवोऽञ्जलिः ।
कुडवौ मानिका तौ स्यात्प्रस्थो द्वे मानिके स्मृतः ॥
प्रस्थद्वयं शुभं तौ द्वौ पात्रकद्वयमाढकम् ।
तैश्चतुर्भिर्घटोन्माननल्वणार्मणकुंभकाः ।
द्रोणस्य शब्दाः पर्यायाः पलानां शतकं तुला ॥ ८ ॥
चत्वारिंशत्पलशतं तुला भारः प्रकीर्तितः ॥ ९ ॥
रसार्णवादिशास्त्राणि निरीक्ष्य कथितं मया ।
रसोपयोगि यत्किंचिद्दिङ्मात्रं तत्प्रदर्शितम् ॥ १० ॥

अष्टादशसंस्काराः ।

स्यात्स्वेदनं तदनु मर्दनमूर्छनं च
उत्थापनं पतनरोधनियामनानि ।
संदीपनं गगनभक्षणमानमत्र
संचारणा तदनुगर्भगता द्रुतिश्च ॥ ११ ॥
बाह्यद्रुतिः सूतकजारणा स्या-
द्ग्रासस्तथा सारणकर्म पश्चात् ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


संक्रामणं वेधविधिः शरीरे-
योगस्तथाष्टादशधाऽत्र कर्म ॥ १२ ॥

पारददोषाः ।

संयोज्यो मर्मणिच्छिन्ने न च क्षाराग्निदग्धयोः ।
शुद्धः स मृद्वग्निसहो मूर्छितो व्याधिनाशनः ।
निष्कम्पवेगस्तीव्राग्नावायुरारोग्यदो मृतः ॥ १३ ॥
विषं वह्निर्मलश्चेति दोषा नैसर्गिकास्त्रयः ॥ १४ ॥
रसे मरणसंतापमूर्छानां हेतवः क्रमात् ॥ १५ ॥
यौगिकौ नागवंगौ द्वौ तौ जाड्याध्मानकुष्टदौ ।
औपाधिकाः पुनश्चान्ये कीर्तिताः सप्तकंचुकाः ॥ १६॥
भूमिजा गिरिजा वार्जा द्वे च द्वे नागवंगजे ।
दशैते हि रसे दोषाः प्रोक्ताः रसविशारदैः ॥ १७ ॥
भूमिजाः कुर्वते कुष्टं गिरिजा जाड्यमेव च ।
वारिजा वातसंघातं दोषाढ्यं नागवंगयोः ॥ १८ ॥
पर्पटी पाटिनी भेदी द्रावी मलकरी तथा ।
अंधकारी तथा ध्वांक्षी विज्ञेयाः सप्त कंचुकाः ॥ १९ ॥
तस्मात्सूतविधानार्थं सहायैर्निपुणैर्युतः ।
सर्वोपस्करमादाय रसकर्म समारभेत् ॥ २० ॥
द्वे सहस्रे पलानां तु सहस्रं शतमेव वा ।
अष्टाविंशत्पलान्येव दश पंचैकमेव वा ॥ २१ ॥
पलार्धेनैव कर्तव्यः संस्कारः सूतकस्य च ।
सुदिने शुभनक्षत्रे रसशोधनमाचरेत ॥ २२ ॥


CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


स्वेदनसंस्कारः १.

त्र्यूषणं लवणाऽऽसूर्यौ चित्रकार्द्रकमूलकम् ।
क्षिप्त्वा सूतो मुहुः स्वेद्यः कांजिकेन दिनत्रयम् ॥२

मर्दनसंस्कारः २.

गृहधूमेष्टिकाचूर्णं तथा दधि गुडान्वितम् ।
लवणासुरिसंयुक्तं क्षिप्त्वा सूतं विमर्दयेत् ॥ २४ ॥
षोडशांशं प्रति द्रव्यं सूतमानान्नियोजयेत् ।
सूतं क्षिप्त्वा समं तेन दिनानि त्रीणि मर्दयेत् ॥ २५
जीर्णाभ्रकं तथा बीजं जीर्णसूतं तथैव च ।
नैर्मल्यार्थं हि सूतस्य खल्वे धृत्वा विमर्दयेत ॥ २
गृह्णाति निर्मलो रोगान्ग्रासे ग्रासे विमर्दितः ।
मर्दनाख्यं हि तत्कर्म सूतस्य गुणकृद् भवेत् ॥ २७

मूर्छनसंस्कारः ३.

गृहकन्या मलं हन्यात्त्रिफला वह्निनाशिनी ।
चित्रमूलं विषं हंति तस्मादेभिः प्रयत्नतः ॥ २८ ॥
मिश्रितं सूतकं द्रव्यैः सप्तवाराणि मूर्छयेत् ।
इत्थं संमूर्छितः सूतो दोषशून्यः प्रजायते ॥ २९ ॥

उत्थापनसंस्कारः ४.

अस्माद्विरेकात्संशुद्धो रसः पात्यस्ततः परम् ।
उद्धृतः कांजिकक्काथात्पूतिदोषनिवृत्तये ॥ ३० ॥

पातनसंस्कारः ५.

ताम्रेण पिष्टिकां कृत्वा पातयेदूर्ध्वभाजने ।
बंगनागौ परित्यज्य शुद्धो भवति सूतकः ॥ ३१ ॥
शुल्बेन पातयेत्पिष्टीं त्रिधोर्ध्वं सप्तधा त्वधः ॥ ३२

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


त्रिफलाशिग्रुशिखिभिर्लवणासुरिसंयुतैः ।
नष्टपिष्टरसं कृत्वा लेपयेच्चोर्ध्वभाजनम् ।
ततो दीप्तैरधःपातमुत्पलैस्तत्र कारयेत् ॥ ३३ ॥
हरिद्रांकोलशम्याककुमारीत्रिफलाग्निभिः ।
तण्डुलीयकवर्षाभूहिंगुसैंधवमाक्षिकैः ॥ ३४ ॥
पिष्टं रसं सलवणैः सर्पाक्ष्यादिभिरेव वा ।
पातयेदथवा देवि व्रणघ्नीयक्षलोचनैः ॥ ३५ ॥
इत्थं ह्यधोर्ध्वपातेन पातितोऽसौ यदा भवेत् ।
तदा रसायने योग्यो भवेद्द्रव्यविशेषतः ॥ ३६ ॥
अथवा दीपकयंत्रे निपातितः सर्वदोषनिर्मुक्तः ।
तिर्यक्पातनविधिना निपातितः सूतराजश्च ॥ ३७ ॥
श्लक्ष्णीकृतमभ्रदलं रसेंद्रयुक्तं तथाऽऽरनालेन ।
खल्वे दत्त्वा मृदितं यावत्तन्नष्टपिष्टतामेति ॥ ३८ ॥
कुर्यात्तिर्यक्पातनपातितसूतं क्रमेण दृढवह्निम् ।
संस्वेद्यः पात्योऽसौ न पतति यावद्दृढश्चाग्नौ ॥ ३९ ॥
तदासौ शुद्ध्यते सूतः कर्मकारी भवेद्ध्रुवम् ।
मर्दनैर्मूर्छनैः पातैर्मन्दः शांतो भवेद्रसः ॥ ४० ॥

ऊर्ध्वपातनम् ।

निरोधसंस्कारः ६.

पृष्ठयंबुजैर्निरोधेन ततो मुखकरो रसः ।
स्वेदनादिवशात्सूतो वीर्यं प्राप्नोत्यनुत्तमम् ॥ ४१ ॥

नियामनसंस्कारः ७.

नियम्योऽसौ ततः सम्यक् चपलत्वनिवृत्तये ।
कर्कोटीफणिनेत्राभ्यां वृश्चिकांबुजमार्कवैः ।

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri


समं कृत्वारनालेन स्वेदयेच्च दिनत्रयम् ॥ ४२ ॥
मरिचैर्भूखगयुक्तैर्लवणासुरिशिग्रुटंकणोपेतैः ।
कांजिकयुक्तैस्त्रिदिनं ग्रासार्थी जायते स्वेदात् ॥ ४

दीपनसंस्कारः ८.

त्रिक्षारसिंधुखगभूशिखिशिग्रुराजी-
तीक्ष्णाम्लवेतसमुखैर्लवणोषणाम्लैः ।
नेपालताम्रदलशोषितमारनाले
साम्लासवाम्लपुटितं रसदीपनं तत् ॥ ४४ ॥

स्वेदयेदासवाम्लेन वीर्यतेजःप्रवृद्धये ।
यथोपयोगः स्वेद्यः स्यान्मूलिकानां रसेषु च ॥ ४५
सर्पाक्षी क्षीरिणी वंध्या मत्स्याक्षी शंखपुष्पिका ।
काकजंघा शिखिशिखा ब्रह्मदंडचाखुकर्णिका ॥ ४६
वर्षाभूः कंचुकी दूर्वा शैर्यकोत्पलशिंबिकाः ।
शतावरी वज्रलता वज्रकंदाऽग्निकर्णिकाः ॥ ४७ ॥
श्वेतार्कशिग्रुधत्तूरमृगदूर्वारसांकुशाः ।
रंभा रक्तालु निर्गुंडी लज्जालुः सुरदालिका ॥ ४८ ॥
मंडूकपर्णी पाताली चित्रकं ग्रीष्मसुंदरा ।
काकमाची महाराष्ट्री हरिद्रा तिलपर्णिका ॥ ४९ ॥
जाती जयंती श्रीदेवी भूकदंबः कुसुंभकः ।
कोशातकी नीरकणा लांगली कटुतुंबिका ॥ ५० ॥
चक्रमर्दोऽमृताकंदः सूर्यावर्तेषुपुंखिका ।
वाराही हस्तिशुण्डी च प्रायेण रसमूलिकाः ।
रसस्य भावने स्वेदे मूषालेपे च पूजिताः ॥ ५१ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

Digitized by Arya Samaj Foundation Chennai and eGangotri



इत्यष्टौ सूतसंस्काराः समा द्रव्ये रसायने ॥ ५२ ॥
कार्यास्ते प्रथमं शेषा नोक्ता द्रव्योपयोगिनः ॥५३ ॥

रसबन्धनम् ।

पञ्चविंशतिसंख्याकान्रसबंधान्प्रचक्ष्महे ।
येन येन हि चांचल्यं दुर्ग्रहत्वं च नश्यति ।
रसराजस्य संप्रोक्तो बन्धनार्थो हि वार्तिकैः ॥ ५४ ॥
हठारोटौ तथा भासः क्रियाहीनश्च पिष्टिका ।
क्षारः खोटश्च पोटश्च कल्कबन्धश्च कज्जलिः ॥ ५५ ॥
सजीवश्चैव निर्जीवो निर्बीजश्च सबीजकः ।
शृंखलाद्रुतिबन्धौ च बालकश्च कुमारकः ॥ ५६ ॥
तरुणश्च तथा वृद्धो मूर्तिबंधस्तथाऽपरः ।
जलबंधोऽग्निबंधश्च सुसंस्कृतकृताभिधः ॥ ५७ ॥
महाबंधाभिधश्चेति पञ्चविंशतिरीरिताः ।
केचिद्वदंति षड्विंशो जलूकाबंधसंज्ञकः ।
स तावन्नेष्यते देहे स्त्रीणां द्रावेऽतिशस्यते ॥ ५८ ॥
हठो रसः स विज्ञेयः सम्यक् शुद्धिविवर्जितः ।
स सेवितो नृणां कुर्यान्मृत्युं वा व्याधिमुद्धतम् ॥५९॥
सुशोधितो रसः सम्यगारोट इति कथ्यते ।
स क्षेत्रीकरणे श्रेष्ठः शनैर्व्याधिविनाशनः ॥ ६० ॥
मूर्छितो यो रसो याति योगं मुक्त्वा स्वभावताम् ।
भावितो धातुमूलाद्यैराभासो गुणवैकृते ॥ ६१ ॥
असंशोधितलोहाद्यैः साधितो यो रसोत्तमः ।
क्रियाहीनः स विज्ञेयो विक्रियां यात्यपथ्यतः ॥ ६२ ॥

CC-0. In Public Domain. Gurukul Kangri Collection, Haridwar

